THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No 25*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA



THE

# SĀPINḌYA KALPALATIKĀ

with a Commentary.



*Printed by Jai Krishna Das Gupta*

*At the Vidya Vilas Press, Gopal Mandir Lane,*

*Benares City.*

1927

श्रीसदाशिवदेवरचिता

# सापिण्ड्यकल्पलतिका

## श्रीनारायणदेवकृतवृत्तिसहिता

THE

# SĀPIṆḌYA KALPALATIKĀ

SADĀS'IVA DEVA.

With the Commentary

OF

NÂRÂYAṆA DEVA.

Edited with Introduction etc.

BY

Jagannātha S'âstrī Hośiṅga, Sâhityopâdhyâya,
Sâdholâl Research Scholar,

Govt. SANSKRIT COLLEGE LIBRARY,
Sarasvati Bhavana, Benares.

1927

॥ श्रीः ॥

# उपोद्धातः ।

अथैष प्रकाश्यते सापिण्ड्यकल्पलतिकानाम धर्मशास्त्रीयो निबन्ध आपदेवापरपर्यायसदाशिवदेवकृतिस्तत्पौत्रनारायणदेवकृतवृत्तिसहितो मुद्रापयित्वा । अद्यत्वे खलु प्रवर्तमाने ग्रन्थसंमुद्रणप्रचारे सर्वत एवैतन्नयनपथगोचरतामुपैति यद्विरल एव तादृशो ग्रन्थः संमुद्रितो, यः किल स्वल्पयाऽपि भूमिकयाऽनलङ्कृतः स्यादिति । वस्तुतो विचार्यमाणेऽपि समन्ततः प्रबन्धेन निरूप्यमाणा एतावन्तो विषया अत्र विद्यन्त इति समासेन सम्पूर्णग्रन्थप्रतिपाद्यमानविषयावगमात् समुचितैवेयमुपोद्धातादिलेखनशैली । न केवलमेतावतैव भूमिकाया आवश्यकत्वमपितु ग्रन्थकर्तृसमयादिनिरूपणेन प्रासङ्गिकत्वमपि । पूर्वे किल सूरयः प्रायः स्वीयग्रन्थेषु स्वकीयनामग्रामसमयादिसम्बन्धमनिर्दिशन्त आत्मानं गोपायित्वा परेषामुपकारं कर्तुं प्रायतन्त ।

अस्तु नामैतत् , साम्प्रतं ग्रन्थादिक्रमालोचयामः—सापिण्ड्यकल्पलतिकेति ग्रन्थनाम्ना सापिण्ड्यविषयकयावत्पदार्थमीमांसनमत्र निर्दिष्टम् । तत्र च-एकशरीरावयवान्वयित्वरूपसापिण्ड्यपदार्थविवेचनपुरस्कारेण तद्गतसकलसपिण्डसम्बन्धं तद्गतस्वनेकेषामविवाह्यत्वं प्रसङ्गतो नैकपण्डितजनग्रन्थपर्यालोचनं तद्युक्तायुक्तविचारणं च प्रादर्शयत् सोऽयं वृत्तिकारः सदाशिवदेवपौत्रो नारायणदेवः स्वपितामहकृतप्रबन्धव्याख्यानेन ।

ग्रन्थकारस्तु पञ्चविंशत्या पद्यानां समपूपुरद्विषयममुम् । प्रथमं तावत् शिष्टाचारपरम्पराप्राप्तं देवतागुरुनमस्कारात्मकं मङ्गलं विधाय स्व नाम ग्रन्थनाम च निरूप्य प्रयोजनं प्रतिपाद्य मुख्यविषयं साापिण्ड्यं प्रदिदर्शयिषुस्तद्गतां भेदादिज्ञानाय प्रसक्तश्छन्दःशास्त्रीयप्रस्ता- रादिषट्प्रत्ययान् नवभिः पद्यैः सविस्तरं न्यरूपयत् ।

ततश्च कूटस्थपुरुषेण सह चतुःषष्टिमिताऽष्टाष्टकभेदेषु कियदवधि साापिण्ड्यं विवाहादिप्रयोजनं भवति तदन्वयिभिः,कस्कश्च केनकेन सह कथंकथं साापिण्ड्यवान् कुत्रकुत्र च तन्निवृत्तिस्ततश्च कासां कासामविवाह्यत्वम्, अन्यगोत्रीयसापिण्ड्यसम्बन्धश्च कैः सहेति सर्वं सङ्क्षेपेण स्पष्टमभिहितवान् । तच्च वृत्तिकारः स्वपितामहाशयं पितृपरम्परया गुरुपरम्परया वा सम्यग्विज्ञाय व्याकृतवान् किञ्च पितृकुले साप्तपौरुषी सपिण्डता सप्रमाणाऽप्रमाणा वेति, मातृ- वंशे च कियत्पर्यन्तं साऽनुस्यूतेति च प्रतिपादयन् वधूवरयोः मातापितरावारभ्य क्रमेण पञ्चत्वे सप्तत्वे च साापिण्ड्यनिवृत्ति- मुक्तवान् । तत्रैव पक्षे गौतमशङ्खयाज्ञवल्क्यचतुर्विंशतिमतादीना- मानुकूल्यं शूलपाणिदेवलमाधवमदनरत्नविज्ञानेश्वरवसिष्ठादिवच- नैर्गौतमस्मृतिवृत्तिकृतो हरदत्तस्योक्त्या च समर्थितवान् । तत्र च विप्रतिपद्यमानेषु महाभाष्यादिविरोधं च सम्यगुदभावयत् । तेनैव च क्रमेणाऽसगोत्रत्वादिकमपि प्रासाङ्गिकमुल्लिख्य साापिण्ड्यस्यै- कतो निवृत्तावन्यतोऽपि निवृत्तिरित्यादिकं च वर्णयामास । द्वैत- निर्णयादिग्रन्थविरोधात् दाक्षिणात्यानामत्रिप्रतिपन्नं व्यवहारं च प्राकाशयत् । यत्तु विष्णुपुराणीयवचनं 'पञ्चमीं मातृपक्षात्तु'

अथ चाऽयं सापिण्ड्यकल्पलताकारः सदाशिवदेवः कुत्रत्यः किंसमयकश्चेति तावद्विचार्यते–अस्य पूर्वजास्तु पूर्वं 'देउळगांव' इति प्रसिद्धे देवालयपुरे न्यवसन्निति तदीयग्रन्थान्ते वर्तमानात्–'देवालयपुरावासिदेवश्रीपतिजन्मनः । आपदेवस्य ग्रन्थोऽयं जगज्जानातु तत्त्वतः ॥' इति पद्यादवसीयते । तथाच ग्रन्थान्ते नीलकण्ठ इत्यमुष्य पितामहस्य नाम समुपलभ्यते । अस्य पुत्रो रामकृष्णदेवः स्वनिर्मितायां रत्नप्रकाशिकाख्यायां वृत्तरत्नाकरव्याख्यायां स्ववंशपरम्पराप्रकाशनसमये देवोपाव्हमात्रिगोत्रसमुत्पन्नं नीलकण्ठदेवसूरिप्रपौत्रं श्रीपतिदेवपौत्रं सदाशिवदेवपुत्रं स्वात्मानं निरदिक्षत् । प्रायः श्रीपतिदेवो ग्रन्थकर्तृसदाशिवदेवपिता ग्रन्थकर्ता वा वाराणसीमाजगामेत्यनुमीयते । वृत्तिकर्ता च नारायणदेवो रामकृष्णस्य सूनुरिति वृत्तिसमाप्तितः स्पष्टं प्रतीयते । इत्थं चाऽनयोः प्रबन्धवृत्तिकृतोर्वंशवृक्षः समुन्नेतुं शक्यते––

नीलकण्ठः
|
श्रीपतिः
|
सदाशिवः (आपदेवः) श्रीविट्ठलशिष्यः
|
रामकृष्णः
|
नारायणः–श्रीनागेशभट्टशिष्यः

एतावता स्पष्टमिदं यत्–पूर्वस्मिन् समये कुलमिदं देवा-

लयपुरावासि, परं नागेशभट्टस्य समये वाराणसीमध्यवसत्। अन्यथा वृत्तिकृत् पित्रा नागेशभट्टस्याऽन्तिकेऽध्ययनार्थं कथङ्कारं नियोजितः स्यात्। सर्वदैव प्रायः प्रसिद्धस्य विदुषः समीपे स्वीयान् पुत्रानध्ययनार्थं प्रेषयन्ति बुद्धिमन्तः। अथचैतद्वंशीया अत्रिगोत्रोत्पन्ना देवोपनामानो दाक्षिणात्या इत्यपि नाऽविदितं मीमांसकानां पुरस्तात्। उभयोरनयोर्वृत्तिप्रबन्धरचयित्रोरेकवंशीयत्वेन सहैव समयनिर्णयः प्रस्तूयते। अस्माकमादर्शपुस्तकान्तर्गतमेकं पुस्तकं १७४०शाकीयं दुर्गोपनामकवासुदेवात्मजबालकृष्णशर्मलिखितं वर्तते। यच्च पायगुण्डोपाह्ववैद्यनाथतनूजनिबालकृष्णेन गुरोर्देवोपाख्यस्याऽऽज्ञया विलिख्य गुरुचरणसमर्पितात् पुस्तकात् प्रतिलिपीकृतम्। प्रतिलिपिकालश्च १७४०शकाब्दः, सच १३५संख्यया सङ्कलितः १८७५मितो वैक्रमाब्दो भवति। ततश्च तस्मात्प्राचीनावेव प्रकृतेऽभिमतौ प्रणेताराविति तु निर्विवादम्। किञ्च १७१४ वैक्रमवत्सरीये धर्मशास्त्रीयव्यवस्थापत्रे काशीस्थानां गागाभट्टप्रभृतिसर्वजातीयप्रधानपण्डितानां सम्मतिसूचकानि हस्ताक्षराणि सन्ति; यत्र तदानीं प्रसिद्धिमप्राप्तस्य प्रसिद्धविदुषः श्रीनागेशभट्टस्य हस्ताक्षराणि न सन्ति, अपितु तद्गुरोः श्रीरामरामभट्टाचार्यस्य वर्तन्ते। रामसिंहवर्मणश्च राजकीया राजती मुद्रा १७४० विक्रमवत्सरीया वरकलवैद्यनाथशास्त्रिणः समीपस्थाऽस्माभिर्दृष्टपूर्वेति ततो लब्धजीविकस्य श्रीनागेशभट्टस्य समयोऽष्टादशशताब्द्या मध्यो निर्णेतुं पार्यते। ततस्तदधिगतविद्यस्य प्रकृत-

प्रबन्धवृत्तिप्रणेतुर्नारायणदेवस्य कालस्तु ततः किञ्चिदर्वाचीन इति सोऽपि वैक्रमीयाष्टादशशताब्दीक एवेति न विरुद्धम् । एष एव नागेशभट्टस्य समयोऽस्मन्मित्रश्रीबटुकनाथशर्मभिः त्रिवेणिकाया आङ्ग्लभूमिकायां निरूपितः । वृत्तिकृता च व्याख्यायां प्रसङ्गतो नरहरिसप्तर्षिसंज्ञस्य कस्यचिद्विदुषो नामोदलेखि, यश्च तद्वंशीयेन सह विचारावसरे सप्तदशशताब्दीक एवानुमितोऽभूत् । अतश्च सप्तदशशताब्द्युत्तरमष्टादशशताब्द्यामयं वृत्तिकृत् नारायणदेव आसीदिति स्पष्टमेव । ततश्च तत्पितुः श्रीरामकृष्णदेवस्य पिता सदाशिवदेवः प्रकृतप्रबन्धनिर्माता सप्तदशशताब्द्या अन्तिमभागस्थ इति सुगममेव । अस्य सदाशिवदेवस्य 'आपदेव' इति द्वितीयं नाम 'मीमांसान्यायप्रकाश'कर्तुरनन्तदेवपुत्रस्याऽऽपदेवस्य भ्रान्तिं कदाचिज्जनयेदिति ततोऽयमन्य इति निर्देशकरणं युक्तमेवेत्युत्पश्यामः । आफ्रेख्टमहाशयनिर्मिते सूचीपत्राणां सूचीपत्रे द्वितीयभागे (Aufrecht's Catalogus catalogurum Part II) सदाशिवदेवनाम्ना 'मनोरञ्जनलीलावतीटीका'ख्योऽप्येको ग्रन्थः समुपलभ्यते । तदेतच्चेति पुस्तकद्वयं विहाय नाऽन्यदद्यावधि पुस्तकमेतस्य, वृत्तिं विहाय वृत्तिकृतश्च समुपलब्धमिति न तद्विषये किमप्यधिकं वक्तुं शक्यमिति विरम्यते ।

एतत्पुस्तकमुद्रणाय काशिकराजकीयसंस्कृतविद्यालयप्रधानाध्यक्षैः श्रीगोपीनाथकविराजमहोदयैः समादिष्टोऽनुमोदितश्च सरस्वतीभवनपुस्तकालयाध्यक्षमित्रवरश्रीनारायणशास्त्रिभिः, तत्रत्येन प्रायोऽशुद्धेन पुस्तकत्रयेण मुद्रणकार्यमात्मना

॥ श्रीः ॥

# कतिपयेषां पारिभाषिकशब्दानां समुच्चयर्थनिरूपणम् ।

| पृष्ठम् | पङ्क्तिः | शब्दाः | अर्थाः |
|---|---|---|---|
| ३ | २ | सापिण्ड्यस्य= | साक्षात् परम्परया वा समानारम्भकत्वेन एकशरीरावयवान्वायित्वस्य । |
| ४ | ४ | कपूनाम्= | ग्रन्थकृत्सङ्केतानुसारेण क्रमशः कन्यापुत्राणां लघुगुरूणां च । |
| १४ | १२ | तोकान्= | तोकानि, अपत्यानि कन्याः पुत्राश्चेति |
| २३ | १२ | कूटस्थपुंसा= | मूलपुरुषेण । |
| २३ | १४ | अष्टकानि= | अष्टसंख्यापरिच्छेदसमूहरूपाणि । |



॥ श्रीः ॥

# विषयसूची.

॥ श्रीः ॥

आपदेवापरपर्यायसदाशिवदेवविरचिता

# सापिण्ड्यकल्पलतिका

## नारायणदेवकृतया वृत्त्या सहिता

---

नागेश्वरं गुरुं नत्वा देवनारायणः सुधीः ।

सापिण्ड्यकल्पलतिकां व्याचष्टे प्राक्तनोदिताम् ॥ १ ॥

प्रारीप्सितग्रन्थसमाप्तिप्रतिबन्धकदुरितशमनाय क्रियमाणस्वेष्टदेवतानत्यात्मकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतो मङ्गलाय च निबध्नंश्चिकीर्षितं प्रतिजानीते—

श्रीमद्गजाननषडाननयुक्शिवौ च
श्रीविट्ठलं निजगुरुं गुरुमेव नत्वा ॥
सापिण्ड्यकल्पलतिकां तनुते विचित्रां
देवः सदाशिव इमां शिशुबोधनाय ॥ १ ॥

श्रीमदिति । श्रीः सरस्वती बुद्ध्यादिर्वा, गजान-
स्यैव श्रीमत्त्वं विशेषणम् । यद्वा श्रीः शोभाविशे
षड्गुणैश्वर्यं वा । विशिष्टविशेषणं श्रीमत्त्वम्, श्रीमन्
च तौ गणेशस्कन्दाभ्यां युक् सम्पदादित्वाद्भावे क्विप्
योगः सम्बन्धो ययोस्तौ च तौ शिवौ च पार्वतीपरमे
श्वरौ—इति। श्रीमान् विष्णुः स च गजाननश्च षडान
नश्च तैर्युगित्यादि पूर्ववदिति काश्चित्[1]। चः श्रीविट्ठल
पदोत्तरं योज्यः। गुरुमेव बृहस्पतिमेव। एवोऽभेदरूपद्योत
कः। निजगुरुं स्वीयगुरुम् । निजपदं स्पष्टार्थं, सम्बन्धिश
ब्दत्वादेव तल्लाभत्वात् । यद्वा ममैव स गुरुर्नान्यस्येति
सूचनाय तत्। यद्वा स्वाभाविकगुरुं सर्वोपदेष्टारमिति
यावत् । यद्वा तात्त्विकगुरुं परमार्थगुरुमिति यावत् । श्री
विट्ठलं च श्रिया युक्तं विट्ठलं च नत्वा। देवः देवोपाख्य
सदाशिवस्तदाख्यः । भाविन्या अपि बुद्ध्या विषयीकर
णात् इमामिति निर्देशः, तेन ग्रन्थकरणे क्लेशाभावः सू
चितः । अथचेमां बुद्धिस्थां विचित्रां विलक्षणां छन्दः-
शास्त्रप्रतिपाद्यदुरूहप्रस्तारादिज्ञानस्याऽपि इतोऽनाय

(१) कैश्चिदिति सर्वत्र पाठः ।

सेन प्रसङ्गेन जायमानत्वात् । एतेन प्राचीनग्रन्थैरगतार्थता सूचिता । सापिण्ड्यकल्पलतिकां सापिण्ड्यस्य समानः एकः मुख्यः पिण्डः देह आरम्भको यस्या यस्य वा सा सपिण्डा स सपिण्डस्तद्भावस्तस्य साक्षात्परम्परया वा एकशरीरावयवान्वयित्वस्येति यावत् । रूढ्या च नातिप्रसङ्ग इति विज्ञानेश्वरः । कल्पलतिकेव कल्पलतिका ताम् । वाञ्छितार्थदातृत्वेन तत्सादृश्यबोधनादुपमालङ्कारो व्यङ्ग्यः । कल्पलतिकात्वोल्लेखेन यस्यैतत्सम्बन्धि यद्यदिष्टं तत्सर्वमितः सुलभमिति सूचितम् । तनुते विस्तारयति न तु करोति, उक्तयुक्तेः । नन्वस्या वैलक्षण्येऽपि एतत्प्रतिपाद्यस्य ह्यस्य ग्रन्थान्तरतोऽपि ज्ञानसम्भवात् किमर्थमियमत आह शिश्विति । तथाच तेषां भिन्नत्वात् दुरूहत्वाच्च न तेषां ततस्तज्ज्ञानसम्भव इति न वैयर्थ्यमस्याः । अत्र सापिण्ड्यकल्पलतिकेत्यनेन सापिण्ड्यं विषयः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारीत्यादि सूचितम् ॥ १ ॥

---

( १ ) प्राचीनग्रन्थे सत्त्वात्–इति घ. पुस्तके टिप्पणी ।

तत्र तावत् साापिण्डयवतां भेदादीन् वक्तुं तज्ज्ञानोपायानाह—

**प्रस्तारोऽग्रे नष्टमुद्दिष्टसंज्ञ-**
**मेकद्वित्र्यादिक्रिया स्यात् कपूनाम् ॥**
**संख्याध्वानौ प्रत्ययाः स्युः षडेते**
**सूत्राण्येषां सिद्धयेऽथो ब्रवीमि ॥ २ ॥**

प्रस्तारोऽग्रे इति। अत्र कपुशब्दौ लघुगुर्वोः कन्यापुत्रयोश्च ग्रन्थकृदभिमतसङ्केतकावित्यर्थवत्त्वेन प्रातिपदिकत्वात् सुबुत्पत्तौ बहुवचनान्तानां द्वन्द्वः। एवमग्रे सर्वत्र बोध्यम्। प्रकारान्तरं तु क्लिष्टमित्युपेक्षितम्। अग्रे आदौ कपूनां कन्यानां पुरुषाणां च प्रस्तारः, नष्टम्, उद्दिष्टसंज्ञम्, एकद्वित्र्यादिक्रिया स्यादित्यस्य प्रत्येकं सम्बन्धः। संख्याऽध्वानौ संख्या च अध्वा च तौ स्यातामिति वचनाविपरिणामः। अत्रोत्तरस्य पूर्वपूर्वसापेक्षत्वात् क्रमेण निर्देशः, तत्रापि नष्टादीनां प्रस्तारज्ञानमूलकत्वादादौ तन्निर्देशः। अत एव अग्रे इत्युक्तिः सफला। विभागादेव षट्त्वे लब्धे षडित्युक्तिर्न्यूनाधि-

कसंख्याव्यवच्छेदाय। तथाचैते षडेव प्रत्ययाः स्युः। प्रतीयते ज्ञायते संख्यादिकमेभिस्ते प्रत्ययाः। यद्वा प्रत्ययो विश्वासोऽस्ति येषां ते प्रत्ययाः। अर्शआद्यच्। प्रस्तारादिना हि सर्वभेदादिज्ञाने सति वक्ष्यमाणं सम्यगिति विश्वासो भवति। अथो अथ। एषां प्रस्तारादीनां सिद्धये ज्ञानाय सूत्राणि सूचकानि तत्स्वरूपबोधकानि पद्यानि ब्रवीमि॥ २॥

तत्रोद्देशक्रमानुरोधेनाऽऽदौ प्रस्तारमाह—

षट्पावाद्यात्कं लिखेत्पोरधस्ता-
च्छेषं यद्वचोपरिष्टात्तथैव॥
ऊने दद्यादत्र पूनेव भूयः
प्रस्तारः स्यात्सर्वकस्तावदेवम्॥ ३॥

षट्पावाद्यादिति। षट् पवो गुरवः पुत्राश्च प्रमाणं यस्येति तद्धितार्थे द्विगुः। मात्रचो 'द्विगोर्नित्य'मिति लुक्। बहुव्रीहिर्वा। सर्वथा समूहो वाच्यः। षट्त्वं च मूलपुरुषं विहाय बोध्यम्। सापिण्ड्यस्य साप्तपौरुषत्वात्। अत एव षडक्षरप्रस्तारस्यैवोपयोग इति षट्पाविस्येवो-

### रगणस्तृतीयः ३

| मू. | पु. | पु. | पु. | पु. | पु. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | पु. | पु. | क. |
| मू. | पु. | क. | पु. | पु. | पु. | क. |
| मू. | क. | क. | पु. | पु. | पु. | क. |
| मू. | पु. | पु. | क. | पु. | पु. | क. |
| मू. | क. | पु. | क. | पु. | पु. | क. |
| मू. | पु. | क. | क. | पु. | पु. | क. |
| मू. | क. | क. | क. | पु. | पु. | क. |

### सगणश्चतुर्थः ४

| मू. | पु. | पु. | पु. | क. | पु. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | क. | पु. | क. |
| मू. | पु. | क. | पु. | क. | पु. | क. |
| मू. | क. | क. | पु. | क. | पु. | क. |
| मू. | पु. | पु. | क. | क. | पु. | क. |
| मू. | क. | पु. | क. | क. | पु. | क. |
| मू. | पु. | क. | क. | क. | पु. | क. |
| मू. | क. | क. | क. | क. | पु. | क. |

क्तम् । षट् पुस्तस्मिन् उपरितनपंक्तौ लिखिते सति आद्या-त्प्रथमात् पोर्गुरोः पुत्राच्चाऽधस्तादधोभागेऽधस्तनपंक्तौ कं लघुं कन्यां च लिखेत् । यद्वत् यथा उपरिष्टादुपरित-नपंक्तौ तथैव । एवो वैलक्षण्यव्यवच्छेदाय । अधस्ता-दित्यस्य मध्यमणिन्यायेनाऽत्रापि सम्बन्धः । अधस्तन-पंक्तौ च व्युत्क्रमे शेषं वाऽवशिष्टं प्वादिकम् । लिखेदित्य-स्यानुषङ्गः । यत्रोपरि पुस्तत्राधोऽपि पुः, यत्रोपरि कस्त-त्राऽधोपि कः कार्य इत्यर्थः । नन्वेवमपि तृतीयभेदादौ क्वचिदाद्यादिस्थानस्य शून्यत्वात्तत्र किं लेख्यमत आह— ऊने इति । अत्र प्रस्तारे ऊने न्यूने शून्ये स्थाने पूनेव पुश्च[1] पू च पवश्चेत्येकशेषेण बहुवचनं सर्वलक्ष्यव्यक्त्य-भिप्रायेण । एवमग्रेऽपि दद्यात् । नैतावदेवेत्याह भूय इति । अमुं प्रकारं भूयो वारंवारं कुर्यात् । अवधिं सूचयन्नुपसंहरति प्रस्तार इति । यावत् सर्वकः सर्वलघुः सर्वकन्यस्तावदेवमुक्तप्रकारेण प्रस्तारः स्यात् । प्रस्ता-र्यन्ते विस्तार्यन्ते पुत्रकन्यारूपतया सपिण्डा अनेनेति प्रस्तारः । अस्योदाहरणं यथा । अत्र कोष्ठन्यासो बोध्यः ।

---

(१) पूश्च पूश्च प्वश्च—इति सर्वत्र पाठः ।

दुष्करमिव मत्वा तदन्वेषणाय प्रयतमानेन मया समलम्भि पुस्तकमेकं भट्टवंशीयाऽस्मन्मातुलश्रीवीरेश्वरभट्टभट्टानां सङ्ग्रहस्थं बहुशः शुद्धम्, तदनु तत्र प्रवर्तमाने मयि न चिराय विक्रयार्थं समागताद्युक्तपुस्तकालयेन क्रीतात् पुस्तकसङ्ग्रहादप्येकं शुद्धप्रायं सुपरिष्कृतं पठितं क्वचिच्च टिप्पण्या समलङ्कृतमादर्शपुस्तकमवापि । एवं च पुस्तकपञ्चकं देवनागराक्षरलिखितमादाय सुखेन प्रवृत्तो मतिमान्द्यात्कथमप्यपारयमेतन्मुद्रणं कर्तुम् । तत्र कसंज्ञकं (पत्राणि १–३१, प्रतिपृष्ठं पङ्क्तयः ९, प्रतिपङ्क्ति अक्षराणि ३४, परिमाणः १०.६″×४.५″), खसंज्ञकं (प० १–२७, पं. ९, अ. ४०, पं. ११.″×५.१″), गसंज्ञकं (प० १–२२, पं. १३, अ. ३३, प. ९.३″×५.७″), घसंज्ञकं (प.१–३६, पं. ११, व. २३, प.८.८″+४.५.″), ङसंज्ञकं तु श्रीवीरेश्वरभट्टभट्टानामिति तद्विवरणं न प्रदर्श्यते ।

अन्ते च श्रीमन्मदाराध्यगुरुवरचरणान् सश्रद्धमभिवन्द्य, सरस्वतीभवनग्रन्थमालाप्रधानसंशोधकान् मय्यतुलं वात्सल्यं बिभ्रतः पूज्यवरश्रीगोपीनाथकविराज एम्०ए० महोदयान् सादरमभिनन्द्य, साहाय्यमत्र विदधद्भ्यः सुहृद्वर–एम्० ए०श्रीबटुकनाथशर्म, खिस्तेश्रीनारायणशास्त्रि, वेतालश्रीअनन्तरामशास्त्रिभ्यो वरकलश्रीवैद्यनाथशास्त्रिणे च धन्यवादान् वितीर्य विरम्यते वृथा पल्लवितादस्माल्लेखादिति शिवम् ।

सरस्वतीभवनम्,
काशी. } जगन्नाथशास्त्री होशिङ्गः ।

इति, तत् 'अतीत्ये'त्यध्याहारेण सङ्गमय्य प्रमाण्य च चतुर्विंशति-मतव्याख्यायाज्ञवल्क्यादिभिः स्पष्टीचकार सर्वं, विस्तारभेक्षास्पृहयालूनां कृते 'अधिकं सापिण्ड्यप्रदीपतोऽवसेयमिती'ति निर्दिदेश च स्वगुरुश्रीनागेशभट्टकृतिम् ।

अथाऽस्म[illegible] 'पितृपत्न्यः सर्वा मातरः' इत्यादि सुमन्तुवाक्यं प्रमाणत्वेनोपन्यस्य तद्व्याख्याविषयं सम्यगालोच्य हरदत्तोन्नीतापस्तम्बधर्मसूत्रव्याख्योज्ज्वलाधृतव्याख्यानमपि पूर्वापरसङ्गत्या विशदीकृत्य एकशरीरावयवान्वयित्वरूपे सापिण्ड्ये दोषशङ्कामुद्भाव्य स्वारम्भकेण सहैकशरीरारम्भकतया तत्संसाध्य रामभरतदशरथकेकयराजादिषूदाहरणद्वारा योजयित्वा सापत्नमातामहादिसम्बन्धे सुमन्तुवचनारम्भान्यथानुपपत्त्या सापत्नमातुलादिष्वप्यवयवान्वयरूपसापिण्ड्याभावाभावं तदितरत्र प्राप्तामतिप्रसक्तिं च साधु निर्णिनाय । वासिष्ठवाक्यव्याख्यानावसरे यद्विरुद्धमेतस्मादुक्तं वचो मनुस्मृतिविरोधेन तच्च गगनकुसुमायमानमित्युपेक्ष्यकोटौ प्रवेश्य वीरमित्रोदयोक्तिं निरस्तवान् । स्वकीयपक्षसमर्थने च हेमाद्रिमाधवहरदत्तमनुनागेशभट्टप्रभृतीन् पोषकान् बुद्ध्वा विषये चैतस्मिन् द्वैतनिर्णयकृन्मतं भ्रान्तमिति निःसंशयमुक्तवान् । तथाच सापत्नमातामहवंशे त्रैपौरुषं सापिण्ड्यं भवतीति निर्णीतवान् । दत्तादिषु देशभेदेन साप्तपौरुषत्रैपौरुषसापिण्ड्यसद्भावमुल्लिख्य तद्भेदादिकं क्रमशः सङ्गमितवान् । इत्थं चाऽमुष्मिन् स्वल्पेऽपि विषयमहत्त्वेन गुरुणि ग्रन्थरत्ने सपिण्डतादिविचारः सम्यगुपपादितोऽस्तीति सर्वमनवद्यम् ।

तत्र तावत् सापिण्डयवतां भेदादीन् वक्तुं तज्ज्ञानोपायानाह—

प्रस्तारोऽग्रे नष्टमुद्दिष्टसंज्ञ-
मेकद्वित्र्यादिक्रिया स्यात् कपूनाम् ॥
संख्याध्वानौ प्रत्ययाः स्युः षडेते
सूत्राण्येषां सिद्धयेऽथो ब्रवीमि ॥ २ ॥

प्रस्तारोऽग्रे इति । अत्र कपुशब्दौ लघुगुर्वोः कन्यापुत्रयोश्च ग्रन्थकृदभिमतसङ्केतकावित्यर्थवत्त्वेन प्रातिपदिकत्वात् सुबुत्पत्तौ बहुवचनान्तानां द्वन्द्वः । एवमग्रे सर्वत्र बोध्यम् । प्रकारान्तरं तु क्लिष्टमित्युपेक्षितम् अग्रे आदौ कपूनां कन्यानां पुरुषाणां च प्रस्तारः नष्टम्, उद्दिष्टसंज्ञम्, एकद्वित्र्यादिक्रिया स्यादित्यस्य प्रत्येकं सम्बन्धः । संख्याऽध्वानौ संख्या च अध्वा च तौ स्यातामिति वचनात्रिपरिणामः । अत्रोत्तरस्य पूर्वपूर्व सापेक्षत्वात् क्रमेण निर्देशः, तत्रापि नष्टादीनां प्रस्तार ज्ञानमूलकत्वादादौ तन्निर्देशः । अत एव अग्रे इत्युक्ति सफला । विभागादेव षट्त्वे लब्धे षडित्युक्तिर्न्यूनाधि

कसंख्यान्यवच्छेदाय । तथाचैते षडेव प्रत्ययाः स्युः । प्रतीयते ज्ञायते संख्यादिकमेभिस्ते प्रत्ययाः । यद्वा प्रत्ययो विश्वासोऽस्ति येषां ते प्रत्ययाः । अर्शआद्यच् । प्रस्तारादिना हि सर्वभेदादिज्ञाने सति वक्ष्यमाणं सम्यगिति विश्वासो भवति । अथो अथ । एषां प्रस्तारादीनां सिद्धये ज्ञानाय सूत्राणि सूचकानि तत्स्वरूपबोधकानि पद्यानि ब्रवीमि ॥ २ ॥

तत्रोद्देशक्रमानुरोधेनाऽऽदौ प्रस्तारमाह—

षट्पावाद्यात्कं लिखेत्पोरधस्ता-
च्छेषं यद्वच्चोपरिष्टात्तथैव ॥
ऊने दद्यादत्र पूनेव भूयः
प्रस्तारः स्यात्सर्वकस्तावदेवम् ॥ ३ ॥

षट्पावाद्यादिति । षट् पवो गुरवः पुत्राश्च प्रमाणं यस्येति तद्धितार्थे द्विगुः । मात्रचो 'द्विगोर्नित्य'मिति लुक् । बहुव्रीहिर्वा । सर्वथा समूहो वाच्यः । षट्त्वं च मूलपुरुषं विहाय बोध्यम् । सापिण्ड्यस्य साप्तपौरुषत्वात् । अत एव षडक्षरप्रस्तारस्यैवोपयोग इति षट्पावित्येवो-

क्रम् । षट् पुस्तस्मिन् उपरितनपंक्तौ लिखिते सति आद्या-त्प्रथमात् पोर्गुरोः पुत्राच्चाऽधस्तादधोभागेऽधस्तनपंक्तौ कं लघुं कन्यां च लिखेत् । यद्वत् यथा उपरिष्टादुपरित-नपंक्तौ तथैव । एवो वैलक्षण्यव्यवच्छेदाय । अधस्ता-दित्यस्य मध्यमणिन्यायेनाऽत्रापि सम्बन्धः । अधस्तन-पंक्तौ च व्युत्क्रमे शेषं वाऽवशिष्टं प्वादिकम् । लिखेदित्य-स्यानुषङ्गः । यत्रोपरि पुस्तत्राधोऽपि पुः, यत्रोपरि कस्त-त्राऽधोपि कः कार्य इत्यर्थः । नन्वेवमपि तृतीयभेदादौ क्वचिदाद्यादिस्थानस्य शून्यत्वात्तत्र किं लेख्यमत आह— ऊने इति । अत्र प्रस्तारे ऊने न्यूने शून्ये स्थाने पूनेव पुश्च[1] पू च पवश्चेत्येकशेषेण बहुवचनं सर्वलक्ष्यव्यक्त्य-भिप्रायेण । एवमग्रेऽपि दद्यात् । नैतावदेवेत्याह भूय इति । अमुं प्रकारं भूयो वारंवारं कुर्यात् । अवधिं सूचयन्नुपसंहरति प्रस्तार इति । यावत् सर्वकः सर्वलघुः सर्वकन्यस्तावदेवमुक्तप्रकारेण प्रस्तारः स्यात् । प्रस्ता-र्यन्ते विस्तार्यन्ते पुत्रकन्यारूपतया सपिण्डा अनेनेति प्रस्तारः । अस्योदाहरणं यथा । अत्र कोष्ठन्यासो बोध्यः ।

(१) पुश्च पूश्च प्वश्च—इति सर्वत्र पाठः ।

### मगणः प्रथमः १

| मू. | पु. | पु. | पु. | पु. | पु. | पु. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | पु. | पु. | पु. |
| मू. | पु. | क. | पु. | पु. | पु. | पु. |
| मू. | क. | क. | पु. | पु. | पु. | पु. |
| मू. | पु. | पु. | क. | पु. | पु. | पु. |
| मू. | क. | पु. | क. | पु. | पु. | पु. |
| मू. | पु. | क. | क. | पु. | पु. | पु. |
| मू. | क. | क. | क. | पु. | पु. | पु. |

### यगणो द्वितीयः २

| मू. | पु. | पु. | पु. | क. | पु. | पु. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | क. | पु. | पु. |
| मू. | पु. | क. | पु. | क. | पु. | पु. |
| मू. | क. | क. | पु. | क. | पु. | पु. |
| मू. | पु. | पु. | क. | क. | पु. | पु. |
| मू. | क. | पु. | क. | क. | पु. | पु. |
| मू. | पु. | क. | क. | क. | पु. | पु. |
| मू. | क. | क. | क. | क. | पु. | पु. |

### रगणस्तृतीयः ३

| मू. | पु. | पु. | पु. | पु. | पु. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | पु. | पु. | क. |
| मू. | पु. | क. | पु. | पु. | पु. | क. |
| मू. | क. | क. | पु. | पु. | पु. | क. |
| मू. | पु. | पु. | क. | पु. | पु. | क. |
| मू. | क. | पु. | क. | पु. | पु. | क. |
| मू. | पु. | क. | क. | पु. | पु. | क. |
| मू. | क. | क. | क. | पु. | पु. | क. |

### सगणश्चतुर्थः ४

| मू. | पु. | पु. | पु. | क. | पु. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | क. | पु. | क. |
| मू. | पु. | क. | पु. | क. | पु. | क. |
| मू. | क. | क. | पु. | क. | पु. | क. |
| मू. | पु. | पु. | क. | क. | पु. | क. |
| मू. | क. | पु. | क. | क. | पु. | क. |
| मू. | पु. | क. | क. | क. | पु. | क. |
| मू. | क. | क. | क. | क. | पु. | क. |

### तगणः पञ्चमः ५

| मू. | पु. | पु. | पु. | पु. | क. | पु. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | पु. | क. | पु. |
| मू. | पु. | क. | पु. | पु. | क. | पु. |
| मू. | क. | क. | पु. | पु. | क. | पु. |
| मू. | पु. | पु. | क. | पु. | क. | पु. |
| मू. | क. | पु. | क. | पु. | क. | पु. |
| मू. | पु. | क. | क. | पु. | क. | पु. |
| मू. | क. | क. | क. | पु. | क. | पु. |

### जगणः षष्ठः ६

| मू. | पु. | पु. | पु. | क. | क. | पु. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | क. | क. | पु. |
| मू. | पु. | क. | पु. | क. | क. | पु. |
| मू. | क. | क. | पु. | क. | क. | पु. |
| मू. | पु. | पु. | क. | क. | क. | पु. |
| मू. | क. | पु. | क. | क. | क. | पु. |
| मू. | पु. | क. | क. | क. | क. | पु. |
| मू. | क. | क. | क. | क. | क. | पु. |

भगणः सप्तमः ७

| मू. | पु. | पु. | पु. | पु. | क. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | पु. | क. | क. |
| मू. | पु. | क. | पु. | पु. | क. | क. |
| मू. | क. | क. | पु. | पु. | क. | क. |
| मू. | पु. | पु | क. | पु. | क. | क. |
| मू. | क. | पु. | क. | पु. | क. | क. |
| मू. | पु. | क. | क. | पु. | क. | क. |
| मू. | क. | क. | क. | पु | क. | क. |

नगणोऽष्टमः ८

| मू. | पु | पु. | पु. | क. | क. | क. |
|---|---|---|---|---|---|---|
| मू. | क. | पु. | पु. | क. | क. | क. |
| मू. | पु. | क. | पु. | क. | क. | क. |
| मू. | क. | क. | पु. | क. | क. | क. |
| मू. | पु. | पु. | क. | क. | क. | क. |
| मू. | क. | पु. | क. | क. | क. | क. |
| मू. | पु. | क. | क. | क. | क. | क. |
| मू. | क. | क. | क. | क. | क | क. |

तथाचैतत्प्रस्तारस्य चतुःषष्टिभेदा भवन्ति। तेषु च क्रमेण मादिगणानामष्टकं प्रत्येकं मगणाद्यष्टकयुक्तं भवति। तदुक्तं सप्तर्ष्युपाख्येन नरहरिणा—

आदिमध्याऽवसानेषु यरता यान्ति लाघवम्।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम्॥
मगणाद्यष्टकयुक्तं मादीनामष्टकं यदेकैकम्।
विस्तृतमत्र ज्ञेयं श्रुतिरसमानं हि सापिण्ड्यम्॥
त्रिके क्वापि स्त्र्यपत्यं चेत्सापिण्ड्यं पाद्मपौरुषम्।
त्रिके क्वापि स्त्र्यनुत्पत्तौ सापिण्ड्यं साप्तपौरुषम्॥

एवं षडक्षरप्रस्तारे गुरुलघूनामपि विन्यासो बोध्यः॥ ३॥

अथ क्रमप्राप्तं प्रस्तारशोधनोपयोगि नष्टमाह—

नष्टाङ्कस्य दले दलो तु समके कं विन्यसेच्चाऽसमे
सैके तस्य दले दलेऽथ विलिखेत्पूनेवमेवं पुनः॥
षट्संख्यावधि नष्टमिष्टमुदितं संख्यावतां प्रीतये
स्थानज्ञाननिवेदनाय कथयाम्युद्दिष्टमेवं पुनः॥ ४॥

नष्टाङ्कस्येति। इयत्संख्यो भेदः किंरूप इति प्रश्ने ईदृश इत्युत्तरं यत्र विषये तादृशप्रश्नोत्तरविषयभू-

तमिति यावत्, तन्नष्टम् । तदुक्तं सङ्गीतरत्नाकरे—

अत्रैतावतिथो भेदः किंरूप इति पृच्छति ।

यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ॥

इति । तत् द्विविधं समं विषमं च । तत्राद्यमाद्यपादेन, द्वितीयं द्वितीयपादेनोच्यते । नष्टस्य तदाख्यभेदस्य योऽङ्कस्तस्य समके समे, स्वार्थे कः । समत्वे तत्र कं विन्यसेत् । तस्य समे दले दले च अर्द्धे अर्द्धे कं कन्यां विन्यसेत् । असम इत्यादेर्मध्यमणिन्यायेन पूर्वत्राऽप्यन्वयः । तोरत्वाऽन्वयः । तथाच तस्य असमे तु दले दले अर्द्धे अर्द्धे स्वतःसम्भविनि सैके खण्डिते च पून् पुत्रान् विन्यसेत् । अथशब्दः समुच्चये । असमेऽर्थान्नष्टाङ्के पुं लिखेत् । असमे तस्मिन् सैके एकेनाऽधिके खण्डिते सति तस्याऽसमे दले दले च पून् लिखेदित्यर्थः । उभयत्राऽपि नैतावन्मात्रेणष्टसिद्धिरत उभयशेषमाह—एवमेवं पुनरिति । उभयत्रापि पुनःपुनः पुनरेवमेवं यथासम्भवं कुर्यादित्यर्थः । अनातिप्रसङ्गायाऽवधिं कथयति षडिति, पूर्वत्राऽन्वयः । तदवधौ हेतुं सूचयन् हेतुगर्भविशेषणघटितमुपसंहरति नष्टमिति । सं-

ख्यावतां ज्ञातसंख्यानां सूक्ष्मज्ञानिनां वा प्रीतये सन्तोषाय इष्टं इष्टस्वरूपप्रत्ययजनकं नष्टमुदितं कथितमित्यर्थः । अनयोरुदाहरणम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ८ | क. | क. | क. | पु. | पु. | पु. |
| ९ | पु. | पु. | पु. | क. | पु. | पु. |

अस्याऽष्टमो भेदः कीदृश इति प्रश्ने—अष्टमाङ्कस्य समत्वात कः । तदर्धस्य चतुर्थाङ्कस्य समत्वात कः । तदर्धस्य द्वितीयाङ्कस्य समत्वात् कः । तदर्धस्यैकस्य विषमत्वात् पुः । तस्मिन् सैकेऽर्द्धे कृते पूर्ववत् पुः । पुनस्तथैव पुर्लेख्यः । नवमो भेदः कीदृश इति प्रश्ने—नवमाङ्कस्य विषमत्वात पुर्लेख्यः । तस्मिन् सैकेऽर्धिते पञ्चमाङ्कस्य विषमत्वात् पुरेव । तस्मिन् सैकेऽर्धिते तृतीयाङ्कस्य विषमत्वात स एव । तस्मिन् सैके द्वितीयाङ्कस्य समत्वात् कः । तस्मिन्नर्धिते एकस्य विषमत्वात पुः । तस्मिन् सैके पुनरर्धिते विषमत्वात पुरेव । एवं सर्वत्र बोध्यम् । अथ क्रमप्राप्तं प्रस्तारशोधनोपयोग्युद्दिष्टं कथयितुं प्रतिज्ञामाह स्थाने-

ति । पुनरत एवं नष्टवत् स्थानानां चतुर्थपञ्चमादीनां यत् ज्ञानं तन्निवेदनाय तत्कथनायोद्दिष्टं कथयामीत्यर्थः । शिष्यावधानाय पुनः प्रतिज्ञेयम् । एवमग्रेऽपि । लिखितोऽयं भेदः कियत्संख्य इति प्रश्ने—अयमियत्संख्य इति यत्रोत्तरमुच्यते तादृशप्रश्नोत्तरविषयभूतसंख्येति यावत्, तदुद्दिष्टम् । यद्यपि प्रस्तारशोधनोपयोगित्वं नष्टोद्दिष्टयोस्तुल्यमित्युक्तक्रमो न नियतस्तथाऽप्युद्दिष्टस्य संख्याप्रश्नोत्तररूपत्वात् नष्टस्य च स्वरूपप्रश्नोत्तररूपत्वात् स्वरूपज्ञानोत्तरमेव संख्याजिज्ञासोदयादनयोरुक्त एव क्रमो बोध्यः ॥ ४ ॥

प्रतिज्ञातमाह—

**एकाङ्कान् द्विगुणानुपर्युपरि तोकान्[1] विन्यसेत्कस्थितै**
**रङ्कैरेकयुतैर्भवेदभिमतं तूद्दिष्टमिष्टं पुनः ॥**
**द्व्याद्यङ्कान् द्विगुणनुपर्युपरि तोकान् विन्यसेत्कस्थितै**
**रङ्कैस्तन्मिलितैर्भवेदभिमतं तूद्दिष्टमिष्टं स्फुटम् ॥५**

---

(१) तोकान्–इति पुंलिङ्गनिर्देशोऽयुक्तः, 'अपत्यं तोकं तयोः समे' इति कोशाद्यनुसन्धानेन तस्य सर्वथा नपुंसकत्वात् । व्याख्यानानुरोधेन ग्रन्थकृतस्तादृश एव प्रयोग इति प्रतिभाति । 'तोकानि न्यसेत्' इति पाठपरिवर्तनेन सौशब्द्यं छन्दःपूर्तिश्च स्यात् ।

एकाङ्कानिति । तोकान् अपत्यानां कन्यानां पुत्राणां चेति यावत् । 'उभसर्वतसोः कार्ये'ति सम्बन्धे द्वितीया, उपपदविभक्तित्वात् । उपर्युपरि ऊर्ध्वमूर्ध्वम् । आदित इति शेषः । एकाङ्कानेकप्रभृतीनङ्कान् द्विगुणान् विन्यसेत् । अग्रे तत्रेति शेषः । तथाच तेषां मध्ये कस्थितैः कन्योपरिस्थितैरेकयुतैरेकेनाऽधिकेन तत्संख्यया मिश्रितैरङ्कैरभिमतं पिङ्गलादिसंमतमिष्टं इष्टसंख्याप्रत्ययजनकमुद्दिष्टं भवेदित्यर्थः । तुरुक्तवैलक्षण्ये । पुनरिति पक्षान्तरे । तथाच—यद्वा तोकानामपत्यानामुपर्युपरि द्विगुणान् द्विप्रभृतीनङ्कान् विन्यसेदित्यर्थः । अग्रे तत्रेति शेषः । तथाच तत्र तेषां मध्ये कस्थैः कन्योपरिस्थितैस्तन्मिलितैस्तया द्वित्वसंख्यया मिलितैर्द्वाभ्यां दलितैः खण्डितैरङ्कैरिष्टमुद्दिष्टं स्फुटमित्यर्थः । अत्रोपरीत्युपलक्षणम्, उभयत्रापि अधोलेखनेऽप्यक्षतेः । अस्योदाहरणं यथा ।

| १ | २ | ४ | ८ | १६ | ३२ |
|---|---|---|---|---|---|
| क. | क. | क. | पु. | पु. | पु. |
| २ | ४ | ८ | १६ | ३२ | ६४ |

अयं भेदः कियत्संख्य इति प्रश्ने—प्रथमपक्षे द्विगुणानेकादिकान् संलिख्य तेषां मध्ये कोपरिस्थितैर्मिलितैः सप्तभिरेकमिश्रितैरष्टाभिरष्टसंख्यो भेदो भवेत्—इति कथयेत् । द्वितीयपक्षे द्विगुणान् द्व्यादिकान् संलिख्य तेषां मध्ये कोपरिस्थितैर्मिलितैश्चतुर्दशभिर्द्वाभ्यां मिलितैः षोडशभिरर्धीकृतैरष्टसंख्यो भेदो भवेत्—इति कथयेत् । एवं सर्वत्र बोध्यम् ॥ ५ ॥

अथ सर्वपुएककद्विकत्रिकादिकभेदकथनद्वारा प्रस्तारशोधनोपयोगिकैकद्व्यादिकपुक्रियामाह——

**वर्णान् प्रस्तृतिजानुपर्युपरितः सैकान् न्यसैकादिकान्**
**पौर्वापर्यविभेदतः स्थितिमतश्चैकैकमूर्ध्वं त्यिप ।**
**भूयश्चैवमुपान्त्यतो विनिवृत्तश्चैकैकमुर्ध्वं त्यिप-**
**न्नेकद्व्यादिकपुक्रिया निगदिता प्रस्तारसंख्यां ब्रुवे ६॥**

---

(१) वि, नि-इत्युपसर्गद्वयपूर्वकात् वृञ् धातोः क्तप्रत्ययेरूपम् ।

वर्णानिति। स्वार्थे तासिः। उपर्युपरितः प्रस्तृति-जान् वर्णान् उपर्युपरि विद्यमानप्रस्तारगतवर्णसमसं-ख्याकान् सैकानेकेनाधिकेन सहितान् अर्थादेकाङ्कान्। पौर्वापर्यविभेदतः स्थितिमतः ब्राह्मणादित्वाद्भावे ष्यञ्, सार्वविभक्तिकस्तृतीयान्तात्तसिः, पूर्वापरभावरूपवैलक्षण्ये-न स्थितियुतान्, एकादिकांश्चैकद्व्यादींश्च न्यस स्थापय। तत्प्रकारमाहैकमिति। तेषां मध्ये एकैकमूर्ध्वमुपर्युपरि एकादिक्रमेण क्षिप। मेलनं चात्र मेल्यमानाङ्कसमसंख्याया उपरि क्षेपो नतु स्वस्यैव स्वरूपेण। तथासति तत्स्थानस्य शून्यतापत्त्या द्वितीयादिमेलनावृत्त्यभावापत्तेः। ताव-न्मात्रेणापीष्टासिद्धेराह भूयश्चैवमिति। वारंवारमुक्तप्रकारं कुरु चेत्यर्थः। अधस्तनं तदुपरि संमेल्य द्व्यङ्कः कार्यः, तं तदुपरि संमेल्य त्र्यङ्क इत्यादिक्रमेण कार्यमिति या-वत्। मेलनेऽवधिमाह उपान्त्येति। एकैकमित्यनुवादः। एकैकमूर्ध्वमुपर्युपरि तथा संमेलयन् त्वं उपान्त्यतः अन्त्या-धोवर्तिनः विनिवृत्तो विशेषेण निवृत्तो भव चेत्यर्थः। उपा-न्त्यपर्यन्तं संमेल्य उपान्त्येन मेलयेति यावत्। अन्त्यश्चा-द्यमेलने सर्वोपरितनः, द्वितीयमेलने तदधोवर्ती, तृतीयमे-

लने तदधोवर्तीत्यादिक्रमेण बोध्यम् । उपान्त्यश्च तत्तदन्त्याधोवर्ती । प्रतिलोमेनाऽऽवृत्त्या एकमेकमङ्कं त्यक्त्वाऽधस्तनान्मेलयेदिति फलितोऽर्थः । उपसंहरति—उपरितनादाद्यन्तयोः क्रमेणेत्यादिः । तथाच उपरितनः सर्वपुरेकस्तत एककाः षट् ततो द्विकाः पञ्चदश इत्यादि । सर्वाध एकः सर्वैक इत्यादि बोध्यम् । अस्योदाहरणं यथा ।

| | |
|---|---|
| १ | १ |
| १ | ६ |
| १ | १५ |
| १ | २० |
| १ | १५ |
| १ | ६ |
| १ | १ |

अत्र सर्वाधःस्थमेकाङ्कमुपरि प्रक्षिप्य द्व्यङ्कं कुर्यात् । ततः त्र्यङ्कादिक्रमेणोपान्त्यमङ्कं षडङ्कं कुर्यात् । उपान्त्यतो निवृत्तेरुक्तत्वात्तस्योपर्यप्रक्षेपः । पुन-

रुक्तक्रमेण षडङ्काधोवर्तिनं पञ्चाङ्कं दशाङ्कं कुर्यात् । अग्रे प्राग्वत् । पुनरपि तदधोवर्तिनं दशाङ्कं त्रिशाङ्कं कुर्यात् । पुनरपि तदधःस्थं दशाङ्कं पञ्चदशाङ्कं कुर्यात् । पुनरपि तदधःस्थं पञ्चाङ्कं षडङ्कं कुर्यात् । अग्रे प्राग्वत् । तथाच षडक्षरप्रस्तारे उपरितनः सर्वेपुरकः । तदधस्तनसंख्याका एककन्याः । तदधस्तनसंख्याका द्विकन्याः । तदधस्तनसंख्याकाः त्रिकन्याः । तदधस्तनसंख्याकाश्चतुष्काः । तदधस्तनसंख्याकाः पञ्चकाः । तदधः सर्वकन्य एक इति चतुःषष्टिभेदानां स्वरूपज्ञानं भवतीति भावः । अथ क्रमप्राप्तां संख्यामाह—प्रस्तारेति । प्रस्तारस्य संख्यामित्यर्थः ॥ ६ ॥

प्रतिज्ञातमाह—

उद्दिष्टाङ्कसमाहृतिस्तु कथिता सैका क्रमाद्यास्थिता
सङ्ख्या सा द्विगुणा सुधांशुरहिताऽध्वा स्पष्टमुक्तो बुधैः॥

अन्यच्च—

भूनेत्राब्धिगजान्नृपानथ रदान् संलिख्य चोर्ध्वं त्वधस्तत्तत्सङ्ख्यपुकान् विलिख्य मतिमानित्थं स्वसंख्यावधि

**प्रस्ताराः प्रभवन्ति सर्वमिलनं संख्या भवेद् भूयुतं**
**यद्वाऽन्त्यो जनयेदिमां द्विगुणतः संख्यां चतुःषष्टिकाम्।**

उद्दिष्टाङ्केति । पादेन क्रमात् स्थिता एकेनाऽधिका या पूर्वोक्तोद्दिष्टाङ्कानां समाहृतिः समूहः । सा तु संख्या कथितेत्यर्थः । यथा षडक्षरप्रस्तारे ।

| १ | २ | ४ | ८ | १६ | ३२ |
|---|---|---|---|---|---|

अथोद्दिष्टाङ्का एकद्विचतुरष्टषोडशद्वात्रिंदङ्काः तेषां समूहस्त्रिषष्टिसंख्यारूपः स एकेनाऽधिकः सन् प्रस्तारसंख्याबोधक इति बोध्यम् । अथाऽध्वानमाह—द्विगुणेति । सेत्यस्य मध्यमणिन्यायेनाऽत्राप्यन्वयः । द्वाभ्यां गुणो गुणनं यस्याः सा । सुधांशुरेकस्तेन रहितोना सा संख्या बुधैरध्वेति स्पष्टं यथातथोक्त इत्यर्थः । प्रस्तारलेखनपर्याप्तः प्रदेशोऽध्वा । यथा षडक्षरे संख्या चतुःषष्टिरूपा सा द्वाभ्यां गुणिता अष्टात्रिंशत्यधिकशतरूपा एकोना सप्तत्रिंशत्यधिकशतरूपा सा तस्याऽध्वा । सप्तत्रिंशत्यधिकशताङ्गुलायां भुवि प्र-

(१) मिलितं—इति सर्वपुस्तकेषु पाठः ।

स्तारपर्याप्तिरिति यावत् संख्याबोधकम् । यद्वेति प्रकारान्तरं वक्तुमाह—अन्यच्चेति । तत्राऽऽदौ प्रागुक्तमनुवदति श्चेति । भूरेका १, नेत्रे द्वे २, अब्धयश्चत्वारः ४, गजा अष्टौ ८, नृपाः षोडश १६, रदाः द्वात्रिंशत् ३२ ऊर्ध्वमुपरि एकद्विचतुरष्टाङ्कान् षोडशाऽङ्कान् द्वात्रिंशदङ्कांश्च क्रमेण संलिख्य, अधस्तु तदधोभागे तु तत्तत्संख्यपुकान्, यस्मिन् यस्मिन् प्रस्तारे भेदस्य घटकस्य या या संख्या तत्तत्संख्याकानि पुमपत्यानि कन्यापत्यानि च । यद्वा उपरितनाङ्कानां या या संख्या तत्तत्संख्याकपुकान् विलिख्य च मतिमान् इत्थं अमुना प्रकारेण । पुनःपुनः कुर्यादिति शेषः । अवधिमाह—स्वेति । यदीयप्रस्तारभेदानां या सङ्ख्या तदवधि तावत्पर्यन्तमित्यर्थः । फलितमाह—प्रस्तारा इति । तथासति प्रस्तारा भवन्ति प्रकाशिता भवन्तीत्यर्थः । ननु का संख्याऽत आह—सर्वेति । सर्वाङ्कानां मिलनं समूहरूपं भुयुतमेकाधिकं प्रस्तारसंख्या भवेदित्यर्थः । गाङ्कुटेत्यत्र कुटस्याऽऽदिरित्यर्थवादिनां मतेन ङित्त्वान्मिलनामिति प्रयोगः । तदेव प्रकारान्तरमाह यद्वेति । अन्त्यो 'रदा'-

नित्युक्तो द्वात्रिंशदङ्को द्विगुणितः सन्निमां चतुःषष्टिकां तद्रूपां स्वार्थे कन् , संख्यां जनयेदित्यर्थः ॥७॥

द्वितीयेत्यादिना तृतीयार्धचरमपादेन तृतीयं संख्याबोधकं प्रकारं वक्तुमाह—

प्रकारान्तरमपि—

एकादिकाङ्कान् द्विगुणान् रदान्ता-
नूर्ध्वं त्वधोऽधोऽङ्कमितान् पुकांश्च ॥
प्रस्तारसङ्घः श्रुतिषण्मितः स्या-
त्सैकोऽङ्कयोगस्तु समस्तसंख्या ॥
अन्त्यो द्विनिघ्नो जनयेदिमां वा
द्वितीयपक्षे तु स एव संख्या ॥ ८ ॥

प्रेति । तत्रादौ प्रागुक्तं प्रकारद्वयमनुवदति—एकेति । एकप्रभृतीनङ्कान् द्विगुणान् । अत्रावधिमाह—रदेति । द्वात्रिंशदङ्कपर्यन्तानूर्ध्वं, अधोऽधस्तु अङ्कमितानुपरितनाङ्कसमसंख्याकान् पुकांश्च संलिखेदिति शेषेणाऽर्थः । तथासति प्रस्ताररूपसमूहः, श्रुतयश्चतस्रः षट् च ताभ्यां परिच्छिन्नः स्यात् । 'अङ्कानां वामतो गति'-

रिति चतुःषष्टिसंख्यापरिच्छिन्नः स्यादिति यावत् । ननु कथं श्रुतिषण्मितत्वमेकेन न्यूनत्वादत आह सैक इति । एकेनाऽधिक उक्ताङ्कसमूहस्तु सर्वसंख्या स्यादित्यनुषङ्गेणाऽर्थः । वा यद्वा । अन्त्यो द्वात्रिंशदङ्कः द्विनिघ्नः द्वाभ्यां गुणितः सन्निमा जनयेदित्यर्थः । तदेवाह द्वितीयेति । उद्दिष्टबोधकद्वितीयपक्षे इत्यर्थः । वैलक्षण्यसूचकस्तु स एव अन्त्याङ्क एव चतुःषष्ट्यङ्क एष प्रस्तारसंख्या भवेदित्यर्थः ॥ ९ ॥

एवमुपयोगिप्रस्तारादीनुक्त्वा प्रतिज्ञातं वक्तुमावश्यककिञ्चिद्विशेषकथनसहितोक्तभेदानुवादपूर्वकमुपयोग्यवान्तरसंज्ञास्तेषामाह कूटस्थेति त्रिभिः—

कूटस्थपुंसाऽऽदिमभागयुक्ता
भेदाश्चतुःषष्टिमिता भवन्ति ॥
अष्टाऽष्टकानि प्रभवन्ति तेषु
समानि चाऽन्यान्यसमानि तेषु ॥१०॥

कूटस्थेति । कूटस्थपुंसा कूटस्थपुरुषेण, आद्यप्रदेशो युक्तो येषां ते चतुःषष्टिपरिमिता भेदा भवन्ति । तेषु

सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी, तेषां भेदानाम् । तथा तेषामिति पाठस्तूचितः । अष्टसंख्याकानि अष्टकानि अष्टौ परिमाणं येषां तानि तत्संख्यापरिच्छेदसमूहरूपाणि प्रभवन्ति । तेषु निर्धारणे सप्तमी, तेषामष्टाऽष्टकानां मध्ये चत्वारि समानि, अन्यानि चत्वार्यसमानि च भवन्तीत्यर्थः ॥ १० ॥

समानि शुद्धान्यसमानि तत्र
द्विधा द्वयं स्याद्विषमं समं च ॥
अन्यद् द्वयं केवलमेव विद्धि
तानि क्रमेणाऽहमुदाहरिष्ये ॥ ११ ॥

समेति । तत्र तयोर्मध्ये समानि शुद्धान्येव । नतु विषममिश्राणि । असमानि तु द्विधा द्विप्रकाराणि । तत्रेत्यनुषज्यते । तयोर्मध्ये द्वयं विषमं समं च स्यात्, नतु शुद्धविषमम् । पूर्वोक्तादन्यद् द्वयं केवलमेव विषममेव विद्धि जानीहि । नन्वेवं सामान्येनोक्तावपि विशिष्यानुक्त्या भेदानां द्राक् बुद्ध्यारूढत्वमत आह—तानीति ।

पूर्वोक्तानि सर्वभेदरूपाणीत्यर्थः। अत एव क्रमेणेत्युक्त-सङ्गतिः ॥ ११ ॥

तदेवाह—

तृतीयमथ सप्तमं विषमपूर्वकं स्यात्समं
तथाऽऽदिमकपञ्चमे विषमसंज्ञके केवले ॥
द्वितीयकतुरीयके तदनु षष्ठकं त्वष्टमं
भवेद्धि समसंज्ञकं त्वथ विनिर्णयः कथ्यते॥१२॥

तृतीयमिति। अष्टकं सर्वत्र विशेष्यम्। अथ चार्थे। तृतीयं सप्तमं चाष्टकं विषमसमसंज्ञकमित्यर्थः। नतु विपरीतादिति भावः। तथा तद्वत्। प्राथमिकपञ्चमे अष्टके विषमसंज्ञके इत्यर्थः। केवले समामिश्रिते। अत्र सर्वत्र कन् स्वार्थे। द्वितीयं चतुर्थं तदनु समेषु तत्पश्चात्तनं षष्ठकमष्टमं च समसंज्ञकमेव। निश्चयेन भवेदित्यर्थः। तथा तद्वत्। परमाभिमतं प्रतिज्ञातमाह—अथेति। उपोद्घातकथनानन्तरमित्यर्थः ॥१२॥

तत्र तावत् केषां केषां सापिण्ड्यमत आह—

जाताश्च षट् पितृपितामहाद्या
जनिष्यमाणाश्च सुतादयः षट् ॥
ते द्वादशाऽमी पुरुषाः सपिण्डाः
स्वस्य स्वयं तेषु सपिण्डसंज्ञः ॥ १३ ॥

जाताश्चेति । तातपितामहाद्या इति पाठः । मिलिताः, एतदर्थमेव चोऽन्त्य उक्तः । अमी पूर्वोक्ताः द्वादश पुरुषाः स्वस्य जातापत्यस्य जनिष्यमाणपितुश्च सपिण्डाः । अर्थसिद्धमेव स्पष्टार्थमाह तेष्विति । तेषु तेषां, पूर्ववत् । स्वयं पूर्वोक्तः । स्वयं सपिण्डसंज्ञः सपिण्डत्वप्रकारकज्ञानविषयश्चेत्यर्थः । संज्ञेत्यत्र कर्मण्यङ् । अयं भावः-समान एको मुख्यः पिण्डो देह आरम्भको यस्या यस्य वा सा सपिण्डा स सपिण्डस्तद्भावः सापिण्ड्यम् । एवञ्चैकशरीरावयवान्वयेन सर्वत्र सापिण्ड्यम् । तच्च क्वचित्साक्षात् क्वचित्परम्परया । तथाहि पुत्रस्य पितृश-

(१) पद्यगतः पठोऽशुद्धः, छन्दोभङ्गात् । टीकाकर्त्रा तत्स्थाने कल्पितः पाठः सङ्गच्छते ।

रीरावयवान्वयेन पित्रा सह, मातृशरीरावयवान्वयेन मात्रा। पितामहादिभिः पितृद्वारेण। मातामहादिभिरपि मातृद्वारेण। एवं मातुलमातृष्वसृपितृष्वस्रादिभिरपि एकशरीरावयवान्वयात्। पतिपत्न्योस्त्वेकशरीरे उभयारब्धे स्वावयवान्वयात्। भ्रातृभार्याणामपि परस्परं स्वारब्धसन्तानान्वयवयवान्वितसन्तानारम्भकत्वेन। एवञ्च यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो द्रष्टव्यः। युक्तञ्चैतत्—'आत्मा हि जज्ञ आत्मन इति प्रजायसे' इति श्रुतेः। 'स एवायं विरूढः प्रत्यक्षेण पृथगुपलभ्यते' इत्यापस्तम्बोक्तेश्च। 'एतत् षाट्कौशिकं शरीरम्। त्रीणि पितृतस्त्रीणि मातृतः, अस्थिस्नायुमज्जाः पितृतः त्वङ्मांसरुधिराणि मातृतः' इति गर्भोपनिषद्यप्यवयवान्वयप्रतिपादनाच्च। निरुक्ते तु 'मांसशोणितानी'ति पाठः। नन्वेवं मातामहादीनामपि दशाहाशौचम्।

दशाहं शावमाशौचं सपिण्डेषु विधीयते।

इत्युक्तेरिति वाच्यम्, 'प्रत्तानामितरे कुर्युः' इत्या-

(१) प्रत्तानां विवाहितानाम्।

दिविशेषवचनजातबलेन सगोत्रत्वसमानाधिकरणसापि-ण्ड्यस्यैव दशाहाशौचप्रयोजकत्वाङ्गीकारेणाऽदोषात् । नचैवमपि दत्तकरूपपुत्रे प्रतिगृहीतृसापिण्ड्यं न स्यात् सर्वथा तदवयवानन्वयादिति वाच्यम्, पुत्रत्वबुद्ध्याऽऽलि-ङ्गनचुम्बनादिभिस्तत्रापि तदन्वयसत्त्वानुमानात् । अतिप्रसङ्गस्तु रूढ्यैव परिहार्यः । तत्रोत्पादकसापिण्ड्य-मप्यस्त्येव । 'गोत्ररिक्थे' इत्यादिमनुवचनात्तु केषाञ्चि-न्निवृत्तिरिति विज्ञानेश्वरादयः । मात्स्यादि(१)प्रतिपादितं यथाकथञ्चिदेकपिण्डक्रियान्वयित्वरूपं सापिण्ड्यं तु मा-तृसन्ताने भ्रातृपितृव्यादिषु चाऽव्याप्त्यापत्त्या समुदायश-क्त्यङ्गीकारेण रूढिपरिग्रहे तत्र तत्राऽवगम्य मातावय-वशक्तिपरित्यागापत्त्या चाऽयुक्तमिति स्पष्टमन्यत्र । तथाचाऽऽद्यान्वयेन तेषां(२)मपि सङ्ग्रह इति बो-ध्यम् ॥ १२ ॥

नन्वेवं पितृकुले साप्तपौरुषं सापिण्ड्यमुक्त, तत्र च

---

(१) आदिना मार्कण्डेयपरिग्रहः ।

(२) तेषां भ्रात्रादीनाम् ।

किं गमकं, किञ्च मातृकुले कियत्पर्यन्तं तदत आह—

कूटस्थतः पञ्चमसप्तमौ चे-
द्वरस्य वध्वाः पितरौ क्रमेण ॥
तयोः सपिण्डत्वनिवृत्तिरुक्ता
पूर्वैस्तु मन्वादिमुनिप्रवीरैः ॥ १४ ॥

कूटस्थत इति । ल्यब्लोपे पञ्चमीयम् । 'पिण्डदः सप्तमः' इति मात्स्यात् । तथाच चेत् यदि कूटस्थमाश्रित्य वधूवरान्यतरस्य साक्षात्परम्परया वा यौ मातापितरौ तौ पञ्चत्वसप्तत्वसंख्यापूरकौ क्रमेण स्तः । वधूवरयोस्तमारभ्य क्रमेण षष्ठत्वेऽष्टमत्वे च सतीति यावत् । अत एव गौतमस्मृतौ—'पञ्चमादूर्ध्वम्' इत्येवोक्तम् । तु तदा । तयोर्वधूवरयोर्मिथः सापिण्ड्यनिवृत्तिः प्राचीनैर्मुनिश्रेष्ठैर्मन्वादिभिरुक्तेत्यर्थः । वधूवरान्यतरस्य कूटस्थमारभ्य सप्तमादूर्ध्वत्वे पितृद्वारकं सापिण्ड्यं निवर्तते । मातृद्वारकं च तदन्यतरस्य तत आरभ्य पञ्चमादूर्ध्वत्वे निवर्तत इति यावत् । अत्राऽतद्गुणसंविज्ञानबहुव्री-

(१) प्रवीणैः—इति क०ख०ग०पुस्तकेषु पाठः ।

ह्रिणा मनुभिन्नास्ते ग्राह्याः। तथाच मात्स्ये 'सापिण्ड्यं साप्तपौरुषम्' इति।

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी।

इति शङ्खश्च। 'मातृबन्धुभ्यः पञ्चमादूर्ध्वम्' इति गौतमश्च।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।

इति याज्ञवल्क्यश्च। नच लोकप्रसिद्ध्योपस्थित-वधूवरान्यतरस्य साक्षाज्जननीजनकवाचकावेव तौ। एवं पञ्चमीसन्ताने षष्ठे निवृत्तस्यापि तन्मातृकुलसापिण्ड्यस्य सप्तमे पुनर्मण्डूकप्लुत्या प्रवृत्तिः स्यात् पितुः सप्तमत्वे एव तन्निवृत्तेरुक्तत्वादिति वाच्यम्, तथासति याज्ञवल्क्यवाक्ये 'असन्देहाय पञ्चमात्' इत्यस्यैवौचित्येन पञ्चमादित्यस्याऽसङ्गत्यापत्तेः।

तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी॥

'पितरो यत्र पूज्यन्ते' इति चतुर्विंशतिमते धौम्याद्युक्तेः। पितामह्यादिषु पितामहादिषु च मातृ-पितृशब्दप्रयोगाच्च। स्मृतौ लोकप्रसिद्ध्यपेक्षया स्मार्त-प्रसिद्धेर्बलवत्त्वाच्चस्मात् कूटस्थतदपत्यचतुष्टयरूपपञ्च-

समुदायघटिकाया द्वितीयादिकादेरपि मात्रादिशब्दो वाचक इति तत्त्वम् । नचैवं 'पञ्चमी चेत्तयोर्माता' इति सङ्ग्रहोक्त्या पञ्चमीत्वसमानाधिकरणमातृत्वस्यैव साापिण्ड्यसङ्कोचकत्वप्रतीतेर्द्वितीयात्वादिसमानाधिकरणमातृत्वस्य कथं तत्सङ्कोचकत्वमिति वाच्यम् ।

सपिण्डानां तु सर्वेषां गोत्रतः साप्तपौरुषी ।

इति शङ्खेन गोत्रैक्यस्यैव सप्तमपर्यन्तं साापिण्ड्यप्रयोजकत्वस्य प्रतिपादनेन गोत्रभेदस्यैव तत्सङ्कोचकत्वेन द्वितीयादिमातर्यपि तस्य सत्त्वेन पञ्चमीत्वस्याऽकिञ्चित्करत्वात् ।

सन्निकर्षेऽपि कर्तव्या त्रिगोत्रात्परतो यदि ।

इति शूलपाण्युदाहृतदेवलेन तथैव प्रतीतेश्च । तथाच मातृघटितचतुःपिण्डात्मकसन्ताने सन्तानभेदावधिभूतकूटस्थादारभ्य गणनायां सन्तानघटकान्त्यो यः पञ्चमस्तत ऊर्ध्वं साापिण्ड्यं निवर्तत इति याज्ञवल्क्यवचनांशार्थः । अत एव 'मातृतः मातृपक्षे पञ्चमात्' इति माधवो, 'मातुः सन्ताने पञ्चमादूर्ध्वम्' इति मदनरत्नो विज्ञानेश्वरश्च सङ्गच्छते । एवञ्च पितृसन्तानमर्थात् पु-

मात्मकमेव गृह्यते शब्दैकवाक्यत्वात् । तथाचोक्त-रीत्या सर्वपितृकषट्पिण्डात्मकसन्ताने सन्तानभेदावधि-कूटस्थमारभ्य गणनायां सन्तानघटकान्त्यो यः षष्ठस्तत आरभ्य सप्तमस्तत ऊर्ध्वं सापिण्ड्यं निवर्तत इति तस्या-ऽपरांशार्थः । पितृतः सापिण्ड्योक्तिश्चाऽऽशौचोपयोगिनी । तथाच पुरुषरूपषट्पिण्डात्मकसन्तानघटकान्त्यजन्यः सन्तानभेदावधिभूतकूटस्थादष्टमः कूटस्थभिन्नगोत्रापत्य-घटितचतुःपिण्डात्मकसन्तानघटकान्यतमजामप्युद्वहेदि-ति पर्यवसितोऽर्थः । एवंसति यथा वसिष्ठादिस्मृति-विरोधो न, तथाऽन्यत्र स्पष्टम् । पितृशब्देनैवाऽत्र[२] मातु-र्बोधनेन पञ्चमसप्तमावित्यत्र न पञ्चमेत्यंशेऽनुपपत्तिः । एवंच सगोत्राष्टमस्याऽष्टमेन कूटस्थेन भिन्नगोत्रषष्ठस्य कूटस्थेन षष्ठेन च सह सापिण्ड्यनिवृत्तौ तत्कूटस्थ-सन्तानान्तरेषु सापिण्ड्यसम्भावनैव न । अत एव वरस्य योऽष्टमः कूटस्थस्तस्य दौहित्री तेन विवाह्येति

---

(१) पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण पूज्यन्ते विशेषान्नरकं ध्रुवम् ॥
इति घ०पुस्तके टिप्पणी ।

(२) अत्र='वरस्य वध्वाः पितरा'वित्यत्र ।

गौतमीयस्मृतिवृत्तौ हरदत्तोक्तिः सङ्गच्छते । अत एव च सर्वस्मृतिषु 'असपिण्डा'मिति परिणेयकन्याविशेषणमेव श्रूयते । नच 'एतैरेव गुणैर्युक्त' इति वरेऽपि तदतिदेशात्तन्निरूपितं तस्यां, तन्निरूपितं वरे च पृथगेव साpिण्ड्यं, नतूभयनिरूपितमेकं व्यासज्यवृत्ति । एतेनाऽन्यतरतो निवृत्तौ निवृत्तिः स्यात् । अन्यथा वरे तदतिदेशवैयर्थ्यापत्तिरिति वाच्यं, सपिण्डशब्दस्य सम्बन्धिकत्वादेवाऽसपिण्डत्वस्याऽन्यत्र लाभे एतैरेवेत्येतच्छब्देन तत्परामर्शे प्रयोजनाभावेन तदनतिदेशात् । नचैकतो निवृत्तावप्यन्यत्र केषाञ्चिदभिमततन्निवृत्त्यभावस्य सिद्ध्यर्थं न तत्परामर्श इति वाच्यम्, केषाञ्चिदभिमतस्यातिदेशिकाऽसमानगोत्रजत्वस्य सिद्ध्यर्थमसमानगोत्रजत्वस्यापि परामर्शापत्तेः । नच तत्रैवाऽत्र वचनविरुद्धस्यापि फलस्याऽभावादिदं नातिदिश्यत इति वाच्यम्, एकतो निवृत्तेऽपि समानगोत्रजत्वमन्यत्र तदा निवृत्तिरूपप्रयोजनस्य स्पष्टत्वात् । नचाऽत्रापीष्टापत्तिरिति वाच्यं, शब्दप्रयोजनमात्रेण वचनविरुद्धार्थस्वीकारे नहि शब्दकृतेन नामार्थेन भवितव्यम्,

अर्थकृतेन नामशब्देन भवितव्यमिति महाभाष्यविरोधापत्तेः । किञ्च वधूवरयोः साक्षात् सापिण्ड्यासम्भवेन स्वसापिण्ड्यकूटस्थसपिण्डत्वमेव तद्वाच्यम् । नह्येकत्र निवृत्तौ सत्यामपरत्रैतत्सम्भवति । नत्वैस्वसपिण्डकूटस्थसन्ततित्वरूपं तदिति अष्टमं वरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात्तत्सन्ततित्वाद् वरस्तां प्रति सपिण्ड एवेति वाच्यं, तत्त्वेन तत्त्वे सोदकादावपि तदापत्तेः ।

किञ्च समानगोत्रजत्वस्यापि तादृशकूटस्थसन्ततित्वात्तत्समानगोत्रजत्वेनैवाङ्गीकारापत्तौ भवदुक्तरीत्या षष्ठीं कन्यां प्रति वरस्याऽसमानगोत्रजत्वेऽपि तस्या वरसमानगोत्रजकूटस्थसन्ततित्वात् कन्या वरं प्रति समानगोत्रजैवेत्यस्याप्यापत्त्या अष्टमेन मातृसन्तानजा षष्ठ्यप्यविवाह्येत्यस्याप्यापत्तेः ।

नच 'स्वगोत्राद्भ्रश्यते नारी'ति वचनात्तत्सन्ततित्वेऽपि समानगोत्रत्वाभावान्न तदापत्तिरिति वाच्यम्, तर्हि 'पञ्चमात्सप्तमा'दिति वचनेनाऽष्टमे तत्सन्ततित्वे-

(१) निर्णयसिन्धुमतम् इति घ. पु. टिप्पणी ।

ऽपि सापिण्ड्याभावप्रतिपादनादविवाह्यत्वोक्तेः प्रकृतेऽपि असाङ्गत्यस्य तुल्यत्वात् । किंच—अयमस्या असपिण्ड इयं स्वस्य सपिण्डेति व्यवहारस्य वाक्यविदामनुचितत्वात् । तस्मादेकनिवृत्तौ निवृत्तिरेव सर्वथा युक्ता । एवं चोभयत्र पुंसन्ताने एकसन्तानस्थाऽष्टमपरसन्तानस्थसप्तमयोः परस्परं त्रिरात्रमेवाऽऽशौचमुचितम् । एतेनैकतः सप्तमपर्यन्तानामन्यतोऽष्टमादिजननादौ दशरात्रमष्टमादीनां च सप्तमपर्यन्तजननादौ त्रिरात्रमाशौचमित्यपास्तमिति दिक् ॥

अयमत्राभिसन्धिः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।

इति याज्ञवल्क्योक्तेरसपिण्डामित्यत्र सापिण्ड्यं निरवधिकं स्मृतम् । ततश्चाऽसपिण्डामिति विशेषणं व्यर्थं स्यादतो याज्ञवल्क्य एवेयता विशेषमुक्तवान् ।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।

इति मातृतो मातुः सन्ताने पञ्चमात्, पितृतः

पितुः सन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्तत इति वि-
ज्ञानेश्वरो व्याख्यत । अत्र पञ्चमत्वसप्तमत्वे कूटस्थ-
मादायैव बोध्ये । तदुक्तम्—

सन्तानं भिद्यते यस्मात्पूर्वजादुभयत्र तु ।
तमादाय गणेद्धीमान् वरं यावच्च कन्यकाम् ॥

इति । एतेनात्र[1] याज्ञवल्क्यवाक्ये मातृत इति
श्रूयते । तत्र मातृशब्दः किं वधूवरयोः साक्षाज्जनन्या
एव वाचक उत साक्षात्परम्परासाधारणः, अन्त्येऽपि[2]
किमन्यतरस्य साक्षात्परम्परासाधारणजननीसत्त्वे सा-
पिण्ड्यं निवर्तते उतोभयोः । तत्र न तावदाद्यः—पञ्च-
मत्वस्य सामानाधिकरण्येन मातृविशेषणत्वे पञ्चमादिति
निर्देशस्याऽसङ्गत्यापत्तेः ।

नच—

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥

इत्यभियुक्तोक्तपद्ये सामानाधिकरण्यस्यैव प्रतीत्या-

---

(१) अपास्तमित्यत्राऽन्वयः— इति घ. पु. टिप्पणी ।
(२) द्वितीयपक्षेऽपि ।

ऽसङ्गतत्वमित्युक्तिरेवाऽसङ्गता तस्यैवाऽन्यथानयनादिति वाच्यम् ,

बाधेऽदृढेऽन्यसाम्यात किं दृढेऽन्यदपि बाध्यताम् ।

इति न्यायेन तस्यैवाऽनार्षत्वेनाऽसङ्गतत्वात् । तस्यापि सकलऋषिवचनाविरोधेन व्याख्यातुं शक्यत्वात् । न द्वितीयः, कूटस्थतदपत्ये चतुष्टयात्मकपञ्चसमुदायघटकद्वितीयादिमातरमादाय षष्ठयोः सापिण्ड्यनिवृत्त्यापत्तौ भवदनभिमतविवाहापत्तेः । न तृतीयः, असपिण्डामिति परिणेयकन्याविशेषणं श्रूयते । तथाच 'एतैरेव गुणैर्युक्त' इति वचनेन वरेऽपि तदतिदिश्यते । अत एव च वरानिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं नतु संयोगवद्व्यासज्यवृत्ति; उभयनिरूपितमेकमेव, यतोऽन्यतरतो निवृत्तेरन्यतरस्मिन्निवर्तेत । तथा सति कन्यावरयोरसापिण्ड्यविशेषणवैयर्थ्यापत्तेः । अन्यतरत्रैव तदुक्त्योभयत्रोक्तेः फललाभात् । तथाच शिष्टवरदाक्षिणात्यानां सर्वेषामविप्रतिपन्नो व्यवहारः, 'एकतो निवृत्तं सापिण्ड्यं नान्यत' इति द्वैतनिर्णयादिग्रन्थविरोधात् ।

ननु 'पञ्चमान्मातृत' इत्यत्र 'शक्यं चक्षुरुप-हन्तु'मित्यत्रेव सामान्ये नपुंसकं स्वीकृत्य सामाना-धिकरण्यमुपपन्नमिति चेन्न, मातृतो मातुः सन्ताने पञ्च-मादूर्ध्वं पितृतः पितुः सन्ताने सप्तमादूर्ध्वं सापिण्ड्यं निवर्तत इति **विज्ञानेश्वर**व्याख्यानेन भवदभिमतसा-मानाधिकरण्यस्यैव निरस्तत्वात्, अनन्यगतिकगतिसा-मान्यनपुंसकत्वकल्पनस्याऽनुचितत्वाच्च ।

यत्तु **विष्णुपुराण**वचनम्—

पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्यायेन विधिना नृप ॥

इति । तत्राऽतीत्येत्यध्याहार्यम्, अन्यथा 'पञ्चमात्स-प्तमादूर्ध्व'मिति **याज्ञवल्क्य**विरोधात् । **चतुर्विंशतिमत-व्याख्या**ग्रन्थविरोधाच्च । तत्र व्याख्यात्रा **याज्ञवल्क्या-**नुरोधेन **विष्णुपुराणे**ऽतीत्येत्यध्याहारेणाऽविरोधसम्पादन-वद्भवदभिमतसामानाधिकरण्यस्य शङ्कासमाधानयोर-कृतत्वात् । अतः पारिशेषाद् वधूवरयोरुभयोः साक्षान्मा-तृनिरूपितसापिण्ड्ये पञ्चमादूर्ध्वं तयोः साक्षात्पितृनिरू-पितसापिण्ड्ये सप्तमादूर्ध्वं तन्निवर्तत इत्यर्थः । तुरीयः

पर्यवसितः । वधूवरयोः कूटस्थेन सह सापिण्डये निरूपितं माता चेत्स तयोर्मातृपक्षः । वधूवरयोः कूटस्थेन सह सापिण्डये निरूपितं पिता चेत्स तयोः पितृपक्षः । तदुक्तम्—

अस्या मातुस्तु यत्पित्र्यं मातृकं वा यदा भवेत ।
उभयं तद्वरस्यापि पितृतः परिकीर्तितम् ॥

इति । अस्या वध्वा मातुर्यत्पित्र्यं पितृसम्बन्धि कुलं मातृकं वा मातृसम्बन्धि कुलं वा यत्र भवेत्तदुभयं कन्याया मातृतः मातृसम्बन्धि मातृत इति यावत् । तुरप्यर्थे, तेन वरस्यापि बोध्यमिति प्रथमः श्लोकार्थः । वरस्यापि पितुर्जनकस्य, अपिशब्दाद्वध्वा अपि इत्यादि पितृतः पितृसम्बन्धि पितृपक्ष इति यावदिति द्वितीयः श्लोकार्थः । इममेवार्थं मनसि निधाय 'मातृतो मातुः सन्ताने' इत्यादि विज्ञानेश्वरो व्याख्यत् । सर्वथा 'पञ्चमा'दित्यादे'रूर्ध्व'मित्यत्रैवाऽन्वयः । मातृतः पितृत इत्यनयोः सपिण्ड्य एवाऽन्वयो न्याय्य इति । सोऽपि न शब्दमर्यादया लभ्यः, तथाऽऽर्षवाक्यतोऽप्रतीतेः । तस्मात्कथं तदर्थवर्णनमित्यपास्तम् । अर्थ-

स्य प्रागुक्तेन दोषलेशाभावात् । अधिकं सापिण्ड्यप्रदीपतोऽवसेयमिति ॥ १४ ॥

उक्तमेव विशदयति आद्य इत्यादिपद्यत्रयेण—

**आद्येऽष्टके पञ्चमके च सप्तमा–**
**त्तृतीयके सप्तमके तु षष्ठतः ॥**
**चतुर्षु शेषेषु समेषु पञ्चमा–**
**त्करग्रहः स्यादिति सर्वसंमतम् ॥ १५ ॥**

आद्य इति । तुश्चार्थे । कूटस्थत इत्यस्याऽनुवृत्तिः । तथाच कूटस्थादारभ्य यः सप्तमस्तमभिव्याप्य सम्पादितप्रस्तारभेदानां यान्यष्टान्यष्टकानि तेषु आद्ये पञ्चमके तृतीयके सप्तमके च अष्टके, समसंज्ञकेषु चतुर्षु द्वितीयचतुर्थषष्ठाष्टमेषु अष्टकेषु पञ्चमादूर्ध्वं षष्ठतः षष्ठादारभ्य पाणिग्रहः स्यादिति सर्वमुनिसंमतमित्यर्थः । यथाश्रुते तु पञ्चमात्सप्तमादित्यनयोः कथञ्चिदुपपत्तावपि षष्ठत इत्यस्योपपत्तिश्चिन्त्या ॥ १५ ॥

---

( १ ) व्याख्यातृगुरुनागेशभट्टकृतात् ।

चतुष्के पुमांसोऽप्यविच्छिन्नरूपा
यदि स्युस्त्रिके क्वापि कन्याजनिः स्यात्
निवृत्तं सपिण्डत्वमत्राऽवसेयं
प्रमाणं तु मन्वादितोऽन्वेषणीयम् ॥१६॥

चतुष्के इति । अपिश्चार्थे । अत्र एषु पूर्वोक्तेषु भेदेषु आद्यभेदचतुष्के त्रिके च सप्तसु पुरुषा अविच्छिन्नरूपा अव्यवहितरूपाः स्युः । क्वापि द्वितीयभेदादौ कुत्रचिदपि कन्योत्पत्तिः स्याद्यदि तदा वधूवरयोः पञ्चमादूर्ध्वं सपिण्डत्वं निवृत्तं निश्चेयम् । तत्र प्रमाणं तु मन्वादितः, अतद्गुणसंविज्ञानबहुव्रीहिणा याज्ञवल्क्यादिस्मृतेर्बोध्यम । अत्र व्याख्याने पद्याधिकपदानि पूर्वतोऽनुवृत्तिलब्धान्युक्तानि । याज्ञवल्क्यादिकं तु प्रागुक्तमेव ॥ १६ ॥

चतुष्के त्वविच्छिन्नविच्छिन्नरूपा
पुमुत्पत्तिरन्यत्र कन्याजनिर्न ॥
त्रिके क्वापि मन्वादिभिस्तत्र चोक्तं
सपिण्डत्वमासप्तमं नान्यथैतत् ॥१७॥

चतुष्के त्विति। तुरुक्तवैलक्षण्ये। यत्र आद्यभेदे चतुष्के त्रिके च सप्तसु अविच्छिन्नविच्छिन्नरूपा[1] सर्वथा अविच्छिन्नरूपा पुरुषोत्पत्तिः। अन्यत्र क्वापि द्वितीयभेदादौ क्वचिदपि कन्योत्पत्तिर्नैव, तत्र मन्वादिभिरासप्तमं सप्तममभिव्याप्य सपिण्डत्वमुक्तम्। पूर्वपद्योक्तं दार्ढ्याय पुनराह नान्यथेति। अन्यथा एतत्पद्योक्तविषयाभावे पूर्वपद्योक्तविषये इति यावत्। न तत्सप्तममभिव्याप्योक्तं सापिण्ड्यं, न किन्तु पूर्वोक्तमेवेत्यर्थः। सप्तममभिव्याप्य सापिण्ड्योक्तिश्चाऽऽशौचोपयोगिनीति प्रागुक्तमेवेति बोध्यम्॥ १७॥

एकदेशीमतमाह——

**पञ्चम्योः कन्ययोः पुत्रौ यदि स्यातां तयोः पुनः॥**
**सापिण्ड्यमनुवृत्तं स्यान्मण्डूकप्लुतितस्तयोः॥१८॥**

पञ्चम्योरिति। यदि पञ्चम्योः कन्ययोः पुत्रौ पुत्र-

(१) विच्छिन्नं च विच्छिन्नं च विच्छिन्नविच्छिन्नं, विच्छिन्नविच्छिन्नं रूपं यस्याः सा तादृशी न भवतीत्यविच्छिन्नविच्छिन्नरूपा।

श्च पुत्री च 'पुमान् स्त्रिये'त्येकशेषः; पुत्रकन्ये स्यातां, तयोः पुत्रकन्ययोः पुनर्यदि पुत्रौ पुत्रकन्ये स्यातां तदा तयोस्तत्पुत्रकन्यापुत्रकन्ययोः सप्तमयोर्मण्डूकप्लुत्या षष्ठयोर्निवृत्तमपि तन्मातृकुलसापिण्ड्यमनुवृत्तं स्यादित्यर्थः। यथाचाऽस्यैकदेश्युक्तित्वं तथा प्रतिपादितमधस्तात् ॥ १८॥

एकदेशीमतमेव विशदयति—

**पञ्चम्योश्चेत्कन्ययोः पुत्रकन्ये**
**स्यातां सापिण्ड्यं निवृत्तं तयोस्तत् ॥**
**तत्पुत्रौ चेत्पुत्रयोः पुत्रकन्ये**
**तत्सापिण्ड्यं वर्तते सप्तमान्तम् ॥ १६ ॥**

पञ्चम्योश्चेदिति । यदि पञ्चम्योः कन्ययोः पुत्रकन्ये स्यातां तदा तयोः पुत्रकन्ययोः षष्ठयोस्तन्मातृकुलसम्बन्धि सापिण्ड्यं निवृत्तम् । यदि तत्पुत्रौ तयोः पञ्चमकन्ययोः पुत्रौ पुमपत्ये तयोः पुत्रयोः पुमपत्ययोः पुत्रकन्ये तदा तत्सापिण्ड्यम् । उक्तोऽर्थः । सप्तमान्तं सप्तममभिव्याप्य वर्तते । यद्यपि षष्ठे निवृत्तं तथापि पुमपत्यत्वात् द्वयोर्विवाहाप्रसङ्गात्, असगोत्रत्वेन द-

शाहाऽऽशौचाप्रसक्तेश्च तन्निवृत्तेर्न फलमित्याशयेन सप्त-मान्तमित्युक्तम् । यद्वा सिद्धान्ताभिप्रायेणैवेदम् । तच्च पूर्वार्धे व्याख्यातमेव । तत्पुत्रौ पञ्चमौ पुरुषतनयौ तयोर्यौ पुरुषतनयौ तयोः पुत्रकन्ये यदि स्तः तदा तत्सापिण्ड्यं सप्तमान्तं वर्तते । पितुः सप्तमत्वेऽष्टमादौ सापिण्ड्यनिवृत्तिरुक्तत्वादित्यर्थः ॥ १९ ॥

सिद्धान्तोक्तिमुपसंहरति——

पित्रादिबन्धुत्रितये तु सप्तमा-
न्मात्रादिबन्धुत्रितये तु पञ्चमात् ॥
सपिण्डताया विनिवृत्तिरुक्ता-
ऽथोऽन्येषु गोत्रेषु सपिण्डतां ब्रुवे ॥२०॥

पित्रादीति । तदेवमित्यादिः । एकस्तुरेवार्थे, व्युत्क्रमे च । अपरश्चार्थे । सप्तमाच्च सप्तममेवाऽभिव्याप्य विद्यमानपित्रादीनां बन्धुत्रितयं तत्पितृष्वसृसुततन्मातुलसुततन्मातृष्वसृसुतरूपं तत्र च पञ्चमादूर्ध्वं षष्ठादारभ्य सापिण्डतया विशेषेण सर्वथा निवृत्तिरुक्तेत्यर्थः । अथ विषयान्तरं प्रतिजानीते—अथोऽन्येष्विति । अथो अथ,

अन्येषु गोत्रेषु अन्यवंशेषु स्वकूटस्थासन्ततिरिति यावत्, तां कथयामीत्यर्थः ॥ २० ॥

प्रतिज्ञातमेव क्रमेणेत्याह—

सापत्नमातुर्जनकस्य वंशे
सापिण्ड्यमुक्तं पुरुषत्रयान्तम् ॥
क्रीतेषु दत्तेष्वथ देशभेदे-
ष्वयं विधिः स्यादिति चाऽऽहुरार्याः ॥२१॥

सापत्नेत्यादि । सापत्नमातुर्जनकस्य तत्पितुः वंशे कुले पुरुषत्रयान्तं जनकं विहाय पुरुषत्रयपर्यन्तं, तं गृहीत्वा तु पुरुषचतुष्टयपर्यन्तं तदपि वचनेनोक्तेष्वेव । नतु सर्वचतुष्टयपर्यन्तम् । तदाहोक्तमिति । सुमन्तुनेति शेषः । इत्थं च सुमन्तुवाक्यम्-'पितृपत्न्यः सर्वा मातरस्त-द्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यथासङ्करकारिणःस्यु'रिति । माधवीये 'तद्भगिन्यो मातृष्वसार' इति न पठितम् । हरदत्तोन्नीताऽऽपस्तम्बधर्मसूत्रोज्ज्वलायां तु 'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तत्सुता मातुलसुतास्त-

स्मात्ता नोपयन्तव्या' इति सुमन्तुवचनं पठितम्। अत्र पितृपत्नीत्वावच्छेदेन मातृत्वातिदेश एव विधेयः, अग्रे तु तल्लब्धार्थानुवादोऽतिप्रसङ्गनिरासाय। तद्भ्रातॄणां मातुलत्वे तत्कन्याया भगिनीत्वात्तेन तदविवाहः। अत एव 'तद्भगिन्यो मातृष्वसार' इति न पठितम्। तेन तद्भ्रातॄणां मातुलत्वे तद्भगिनीनां तत्त्वस्याऽर्थसिद्धत्वात्। अत एव न पाठभेदेऽपि फलभेदः। अत्र चेन 'तत्सुता भ्रातर' इत्यस्य समुच्चयः। अत एव तदपत्यानि इति सामान्योक्तिः। अन्यथा भागिनेय्या तस्याऽविवाहो भगिन्या च विवाह इत्यसङ्गतिः स्पष्टैव। इदं च मातृगमनप्रायश्चित्तस्य तत्परिणयनतदुपगमतद्वधादिप्रायश्चित्तस्य तदाशौचादेरविवाहप्रयोजकतत्सापिण्ड्यस्य चाऽतिदेशं करोति। अत्र प्रथमवाक्ये यन्निरूपितं सपत्नमातृत्वं तं प्रत्येवाऽऽशौचसापिण्ड्याद्यतिदेशो न तत्पुत्रादिकं प्रत्यपि। एवं तत्कन्यानां भागिनेयीत्वातिदेशेऽपि न तत्कन्यायां भागिनेयिकन्यात्वातिदेशः, 'यावद्वचनं वाचनिक'मिति सिद्धान्तात् उक्तेरप्रयोजकत्वात्। एवं च परिगणितेष्वेव सापिण्ड्यं नतु

सप्तमपञ्चमपर्यन्तमन्यथा लक्षणापत्तेरिति बोध्यम् ।

एतेनाऽप्य[1]सपत्नमात्रा सह कथं सापिण्ड्यं तच्छरीराव-यवान्वयाभावात् । ननु पितृशरीरावयवानां स्वस्मिन्नारम्भ-कत्वेन सपत्नमातरि बोधयत्वेनाऽन्वयादेकशरीरावयवा-न्वयेनैव सापिण्ड्यसिद्धिरिति वाच्यम्, पित्रवरुद्धदासी-भुजिष्यादिभिरपि सापिण्ड्यापत्तेः । नच स्वसपिण्डपि-तृसपिण्डत्वेन सपत्नमात्रा सह सापिण्ड्यमिति वाच्यम्, सापत्नमातामहादिभिरप्येतत्सापिण्ड्यातिप्रसङ्गापत्तेः । तथाहि—स्वसपिण्डः पिता तत्सपिण्डा सपत्नमातेति तया सह सापिण्ड्यं यथा, तथा तत्सपिण्डेन तत्पि-त्रा सपत्नमातामहेनापि समं सापिण्ड्यं केन वार्यते । नच तत्र पितृशरीरावयवान्वयिनि सपत्नभ्रातरि सपत्न-मातुरप्यवयवान्वयात् स्वारम्भकेन सहैकशरीरारम्भकतया तया सह सापिण्ड्यमिति वाच्यम्, तत्रापि प्रागुक्ताति-प्रसङ्गात्तस्यापि स्वकन्याद्वारा दौहित्रशरीरावयवान्वयात् ।

अत्रोदाहरणं यथा—श्रीरामस्य पिता दशरथस्तद-वयवान्वयिनि भरतशरीरे केकयराजस्याप्यवयवान्वयात्

(१) अपास्तमित्यनेनाऽन्वयः ।

रामकेकयराजयोः सापिण्ड्यमिति। एवं सपत्नमातुलादिभिरप्येकशरीरारम्भकारभ्यत्वेन सापिण्ड्यापत्तिः। यथा साक्षात्परम्पराभ्यामेकस्य भरतशरीरस्यारम्भकौ दशरथकेकयराजौ तद्वाह्यत्वेन रामयुधाजितोरपि सापिण्ड्यम्। एवमेव सापत्नमातुलकन्यापुत्रादिभिरपि सापिण्ड्यमुन्नेयं, साक्षात्परम्पराविवक्षायाः सर्वशेषत्वात्॥

ननु यत्र यत्र सपिण्डशब्दप्रयोगस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्य इति मिताक्षराग्रन्थस्वारस्यात् सापिण्ड्यावयवान्वययोर्व्याप्यव्यापकभावावगमात् सपत्नमातुलादावेकशरीरावयवान्वयसत्त्वस्य व्यापकव्यभिचारित्वेनाऽदोषत्वं सपिण्डशब्दप्रयोगाभावादिति चेन्मैवम्, 'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरो भगिन्यो भगिनीसपत्न्यश्च भगिन्यस्तदपत्यानि भागिनेयान्यथासङ्करकारिणीति याप्यापतिता भवन्ती'ति सुमन्तुना सापिण्ड्यव्याप्यमातुलत्वादिव्यपदेशात्। यद्येवं तर्हि न कोपि दोषो लक्ष्यलक्षणोभयसत्त्वादिति चेन्न, तथाहि सति सहजसिद्धावयवान्वयरूपसापिण्ड्यसद्भावेन सापत्नमातुलादिषु सापि-

ण्ड्यातिदेशाय वचनारम्भोऽनर्थकः स्यात्। तथाच सुमन्तुवचनारम्भान्यथानुपपत्त्यैव सापत्नमातुलादिष्ववयवान्वयरूपसापिण्ड्याभावोऽवगम्यत इत्यतिप्रसङ्गः सुस्थः, तस्मान्न सापत्नमात्रा सह सापिण्ड्यमवयवान्वयाभावादिति प्राप्ते उच्यते-'यत्र यत्रे'त्यादिग्रन्थस्वरसात् सपत्नमातरि सर्व्वजनीनसपिण्डशब्दप्रयोगान्यथानुपपत्त्याऽवयवान्वयोऽवश्यं वाच्यः। स च यथा सपत्न्योरेकेन भर्त्रा सहैकशरीरारम्भकतया तथा स्वारम्भकेन सहैकशरीरारम्भकतया सपत्नमात्रा सहापि सिध्यत्येव। एवमेकतः सिद्धावन्यतोऽप्येकशरीरारम्भणसहकार्यारब्धत्वेन तत्सिद्धिः। यथा पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सहेत्युक्ते पुत्रेऽपि स्वशरीरावयवान्वयेन पुत्रेण सहेत्यपि सिद्धम्। तस्मादस्ति सपत्नमात्रा सहाऽप्यवयवान्वय इति न दोषः।

नच सपत्नमातामहादिष्वतिप्रसङ्गः, इष्टापत्तेः। नचैवं सपत्नमातुलादिष्वप्येकशरीरारम्भकारब्धत्वादिना सहजसिद्धे सापिण्ड्ये 'तद्भ्रातरो मातुला' इत्यादिवचनारम्भवैयर्थ्यमिति वाच्यं, पञ्चमसप्तमादिसंख्यान्तरपरिसंख्यार्थक्योपपत्तेः। तथाहि मातृपितृसापिण्ड्येनाऽविवाह्य-

त्रेऽत्रद्वयं त्वपरमतेनोपन्यस्य मातृसपत्न्या मातृपितृत्वाभावेन सापिण्ड्यद्वारताऽसम्भवात्तत्सम्बन्धिनां साপिण्ड्याभावादविवाह्यत्वाप्रसक्तौ 'पितृपत्न्यः सर्वा मातर' इत्यारभ्यते । तत्र मातृसपत्नी सपत्नमातेत्यादिशब्दैरभिधानसम्भवेऽपि यत् पितृपत्नीशब्देनोपादानं तत्तस्याः पितृद्वारकसम्बन्धद्योतनाय । यच्च पत्नीशब्दोपादानं तपित्रवरुद्धदासीभुजिष्यादिभिः साপিण्ड्यावारणाय । यच्च सर्वशब्दोपादानं तद्विजातीयादिभिरपि साপिण्ड्यद्योतनाय । तेन च तत्सम्बन्धानामप्यासप्तमादापञ्चमाद्वाऽविवाह्यत्वप्रसक्तौ 'तद्भ्रातरो मातुला' इत्यादिपरिसंख्यायते । तथा—एते एवाऽविवाह्या नान्ये—इति । 'पञ्च पञ्चनखा भक्ष्या' इतिवत् । नचाऽयं नियमः सम्भवति, यथोक्तरीत्या साপিण्ड्यसद्भावेनाऽविवाह्यत्वस्य नित्यवत्प्राप्ततया पाक्षिकत्वाभावात् । नचाऽयमपूर्वोऽविवाह्यत्वप्रतिषेध एव कुतो नेष्यते सर्वजनितसापिण्ड्याभावेन प्रसक्तिसम्भवादिति चेन्न, साक्षात्परम्परया वा स्वारम्भकेण सहैकशरीरारम्भकत्वादिति सिद्धस्य साপিण्ड्यस्याऽपलपितुमशक्यत्वात् ।

तत्सिद्धौ चाऽतिप्रसङ्गभङ्गायाऽवश्यापेक्षितव्यवस्थाऽभिधानमस्मत्पक्षे। अपूर्वनिषेधपक्षे त्वनपेक्षितार्थवचनमपूर्वान्तरकल्पनाक्लेशश्चेति दोषद्वयम्। तथाहि व्यवस्थातिक्रमे हि सपिण्डोद्वाहनिषेधाश्रितत्वेन व्यवस्थायाः सपिण्डोद्वाहनिषेधातिक्रमजन्यमेव दुरितं कल्प्यते न पृथक् । अपूर्वनिषेधपक्षे तु सापिण्ड्याभावात् सपिण्डोद्वाहनिषेधातिक्रमजन्यदुरिताद् दुरितान्तरकल्पनाक्लेशः प्रकृतनिषेधातिक्रमे इति। तस्मात् स्वभावसिद्धसापिण्ड्यस्याऽपलपितुमशक्यत्वात्तदतिप्रसङ्गभङ्गायाऽवश्यापेक्षितव्यवस्थाभिधानार्थमिदमुदेतीति सर्वं सुस्थम्। अथ वाक्यार्थः—तद्भ्रातर इत्यत्र तच्छब्देन पितृपत्नी परामृश्यते प्रधानत्वात् । तद्भगिन्य इत्यत्रापि सैव, पूर्वपरामर्शेन सन्निहितत्वात्प्रधानत्वाच्च । तद्दुहितर इत्यत्र तु न तत्परामर्शस्तद्दुहितॄणां साक्षात्पित्रारब्धत्वेन साापिण्ड्येनाऽसपिण्डामिति सामान्यवचनेनैव विषयीकरणादेतद्विशेषवचनविषयान्तर्भावानर्थक्यात् । किन्तु सपत्नमातुलमातृष्वस्रोरेव परामर्शः । ततश्च तत्कन्यानामेवाऽविवाह्यत्वमत्रोच्यत इति सम्यक् ।

पुत्रस्यैव सापत्नमातृकुले सापिण्ड्यं, न सापत्नमातृकुलस्य पुत्रकुले इति शङ्कापनोदायाह भगिनीसपत्न्यश्च भगिन्य इति । भगिनीसपत्नीत्वव्यपदेशेनोभयतोऽपि सापिण्ड्यप्रदर्शनात्परस्परसन्ततेरविवाह्यत्वं दर्शयति। तदेवाह तदपत्यानीति। तासामपत्यानीत्यत्रापि तच्छब्देन सापत्नमातुलमातृष्वसृतदुभयदुहितॄणां भगिनीसपत्नीनां च परामर्शः । पितृपत्नीपरामर्शे तु तदपत्यानां भगिनीत्वेन भागिनेयत्वव्यपदेशानुपपत्तेः । ततश्च सापत्नमातुलमातृष्वसृतदुभयदुहितृतदपत्यानि भगिनीसपत्न्यपत्यानि चाऽविवाह्यानीति वाक्यार्थ इति ।

नन्वत्रोभयतः सापिण्ड्यं न सिध्यति प्रमाणाभावात् । तथाहि पितृपत्नीशब्दो हि सपत्नमातुः पितृद्वारकमेव सापिण्ड्यं वदतीत्युक्तमेव प्राक् । तच्च सापिण्ड्यं यस्य पितुः सा पत्नी तस्यैवेति सापिण्ड्यावधिपरिच्छेदाकाङ्क्षाऽपि तस्यैव, न तत्पितृपत्नीपक्षस्थानां पितृपत्नीरूपसापिण्ड्यप्रयोगिताभावात् । नहि सा तेषां पितृपत्नी भवति, येनेदं वाक्यं तत्सा-

पिण्ड्यं परिच्छिन्द्यात् । अस्ति तु भगिनीत्वादिना तेषां तत्सापिण्ड्यं, तत्र चाऽस्त्येव परिच्छेदकं 'पञ्च-मात्सप्तमादूर्ध्व'मित्यादि । अत एव यद्धर्मपुरस्कारेण येन सह सापिण्ड्यं तद्धर्मपुरस्कारेणैव तदुपादानम् । यथा 'तद्भ्रातरो मातुला' इत्यादिषु । तद्भ्रातृत्वादिना यदीद-मेव वाक्यमुभयतोऽपि सापिण्ड्यपरिच्छेदकं स्यात्तर्हि पुरुषसंख्याविशेषपुरस्कारेणैव प्रवर्तते । यथा 'पञ्च-मात्सप्तमादूर्ध्व'मित्यादि न तद्भ्रातृत्वादिपुरस्कारेण प्रवर्तते । तस्मान्नोभयतः सापिण्ड्यपरिच्छेदकमिदमि-त्यवसीयते । किन्तु यद्धर्मपुरस्कारेण यदुपादानं त-स्यैवाऽविवाह्यत्वं प्रतिपादयति नान्येषाम् । अन्यथा तद्भ्रातृपदादीनां तत्पित्राद्युपलक्षकतापत्तेः । तथाच पुनरतिप्रसङ्गस्तद्वारणाय 'पञ्चमा'दित्यादि वाक्यमेव स्त्री-कार्यमिति चेत्, एतद्वाक्यारम्भाय यथोपपत्त्यैव ब्रूमः । ततश्च परिगणितातिरिक्तेषु येषु सापत्नमातामहसापत्न-मातुलपुत्रसापत्नमातृष्वसृसुतेष्वेतद्वाक्यं न प्रवृत्तं, 'पञ्च-मा'दित्यादिवाक्येन तत्र विवाह्यतापत्तिरवशिष्यते । नचे-ष्टापत्तिः, उक्तरीत्याऽवयवसम्बन्धसत्त्वेन सापिण्ड्यसद्भा-

वात् सपिण्डानिषेधस्याऽत्राप्यक्षतत्वात । तर्हि सपिण्डा-निषेधादेवोक्तविषयेषु विवाह्यताप्रसङ्ग इति चेन्न, सापिण्ड्यस्याऽऽसहस्रपुरुषमप्यविच्छेदेन परिच्छेदकाभावे निषेधस्यातिप्रसङ्गात । तस्मादनन्यगत्या तद्भात्रादिपदं तत्पित्रादीनामप्युपलक्षणं वाच्यम् । ततश्च शब्दोपात्तानां प्रचयेन यावतां कथञ्चिदुपस्थितिस्तावद् दूरं सापिण्ड्य-मनेन परिच्छिद्यत इति पर्यवसन्नम् । तद्यथा-सपत्न-मातामहो मूलपुरुषः प्रथमः, तत्पुत्रः सापत्नमातुलो द्वितीयः, तत्पुत्रः सापत्नमातुलपुत्रस्तृतीयः । किमस्या-ऽश्रुतस्य ग्रहणे प्रमाणमिति चेत्—'तद्दुहितरश्च भागिन्य' इति मातुलमातृष्वसृदुहितृ-उपादानमेवेति ब्रूमः । दुहितॄणामिव पुत्राणामपि सम्बन्धाविशेषात् तत्पुत्रः साप-त्नमातुलपुत्रश्चतुर्थः । अत्रापि तदपत्यानि भागिनेया-नीति मातुलमातृष्वसृदुहित्रपत्यानां मातुलमातृष्वसृ-पुत्रापत्यानामप्युपलक्षणं तुल्यसम्बन्धतया बाधकाभा-वात् । एवं सापत्नमातृकुले चतुःपुरुषं सापिण्ड्यं सिध्यति । एवं सापत्नमातृष्वसृसन्तानेऽपि ज्ञेयम , मातुलमातृष्वस्रोर्मूलपुरुषस्यैकत्वात । ततश्च सापत्न-

मातामहादेव मूलपुरुषाद् दुहितृसपत्नीसन्तानं तत्सन्ताने च यावच्चतुर्थं परस्परमविवाह्यताप्रदर्शनेन चतुःपुरुषं सापिण्ड्यमनेनोक्तमिति सिद्धम् । 'तद्भ्रातरो मातुला भगिनीसपत्न्यश्च भागिन्य' इत्यन्योन्यं तुल्यसम्बन्धप्रतिपादनलिङ्गादुभयतः सापिण्ड्यसिद्धेः ।

यत्तु मदनपारिजातेन—

पञ्चमी सप्तमी चैव मातृतः पितृतस्तथा ।

इति वसिष्ठवाक्यं सापत्नमातामहकुलविषयमवयवानुवृत्तेरभावादिति व्याख्यानं, तदाकाशलतेव मूलानपेक्षमेवोज्जृम्भते । उक्तरीत्याऽवयवानुवृत्तिसद्भावात् सापत्नादिपदाश्रवणात् सापत्नवाक्यैकवाक्यत्वाभावात् सौमन्तविशेषवाक्यविरोधाच्चेति । नच वसिष्ठवाक्यान्यथानुपपत्तिरेव मूलमिति वाच्यम्, अन्यथोपपत्तेर्वक्ष्यमाणत्वात् । तस्मादुक्तमेव साधीय इत्यलमतिविस्तरेणेति वीरमित्रोदयोक्तमपास्तम् । प्रागुक्तवक्ष्यमाणसकलदोषापत्तेः । सुमन्तुवाक्यस्योक्तरीत्योपपत्तेः । 'भगिनीसपत्न्यश्च भगिन्य' इति पाठस्य हेमाद्रिमाधवहरदत्ताद्यसंमतत्वाच्चेति । सापिण्ड्यप्रदीपे तु विस्तरः । इदं च माधव-

मते गान्धर्वादिविवाहविषयमेव, तेन तथा पाठाङ्गीकारात्। हेमाद्रेस्तु हरदत्तोक्त एव पाठः सम्मतः । एवञ्चाऽऽद्य-पाठमुररीकृत्य यत्प्रजल्पितं द्वैतनिर्णयकृता तत्सर्वं भ्रान्तिमूलकमिति स्पष्टं गुरुचरणोन्नीते सापिण्ड्यप्रदीपे।

नचैवमपि 'असपिण्डा चे'ति मनूक्तेश्चकारेण पितुरसपिण्डाया अपि ग्रहणात् यस्य सपत्नमाता तदप-त्यस्य सापिण्ड्याभावेऽपि निषेधः स्यादिति वाच्यम्, तस्याः 'पञ्चमात्सप्तमा'दिति याज्ञवल्क्यैकवाक्यत्वात् पितुरित्यादेः पितृन इत्यतोऽवशिष्टार्थत्वेन लक्षणाया अ-प्रसक्तेरेकमूलकल्पनालाघवानुरोधेन लक्षणाया अ-प्युचितत्वात् । वस्तुतस्तु दत्तकादिविषयमिति तत्रैव स्पष्टं, शिष्टाचाराविरुद्धं याज्ञवल्क्येन तस्य तद्विषय-त्वकल्पनात् । किञ्चैवं सपत्नमातरि मातृत्वातिदेशात्त-स्या मनुवचने ग्रहणापत्तौ तत्पितुः पञ्चम्यादेरपि मातृ-सपिण्डात्वेन तत्सापत्नपुत्रस्य निषेधापत्तौ 'पितृपत्न्यः सर्वा मातर' इत्येव सिद्धौ सुमन्तुवचनस्य वैयर्थ्यापत्ते-रिति दिक् । एवं च हरदत्तरीत्या पुरुषत्रयान्तमिति मूलं यथाश्रुतमेव साधु ।

अथ साप्तपौरुषं त्रिपुरुषं च साविण्ड्यं विषयभेदेनाह क्रीतेष्विति । अथ क्रीतेषु देशभेदेषु देशनं देशः, दिश अतिसर्जने, अतिसर्जनं दानं तद्भेदभिन्नेषु दत्तेषु दत्तकेषु च । अयं चाऽव्यवहितोक्तः पुरुषत्रयपर्यन्तसापिण्ड्यसत्तारूपः, चाद्यवहितः साप्तपौरुषसापिण्ड्यसत्तारूपो विधिः प्रकारः स्यादित्यार्या मन्वादय आहुरित्यर्थः । क्रीतेष्वित्यस्य कृत्रिमेष्वित्यर्थः, तेषां कलिवर्ज्यत्वात् । नच दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह इति शौनकेन तेषामपि कलौ निषेधात्, कथमेतेऽपीति वाच्यं, दत्तकपदेन तस्याप्युपलक्षकत्वात् ।

औरसः क्षेत्रजश्चैव दत्तकः कृत्रिमः सुतः ।

इति कलिधर्मप्रस्तावे पराशरस्मरणात् । अत एव—

श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति ।
बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥

इति मनूक्तिः सङ्गच्छते । औरसादीनां सर्वेषां पुत्राणां प्रद्युतत्वादौरसादीनुपक्रम्य 'तेषां पूर्वः पूर्वः श्रेयान् स एव दायहरः स चाऽन्यान् बिभृया'-

दिति विष्णुपुराणवचनात् । औरसादीना पुत्राणा पूर्वपूर्वाभावे परः परो रिक्थमर्हति । पूर्वसद्भावे परसंवर्धनं स एव कुर्यात्तदप्यपवादेतरविषयम् । यदि तु समानरूपा बहवः पुत्रास्तदा सर्वे एव विभज्य धनं गृह्णीयुरिति तद्व्याख्यातारः । इदं चौरसपरम्—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजावतम् ? ॥

'ऊर्ध्वं पितुश्च मातुश्चे'त्यादिनैव तद्विभागोक्तेः । किन्तु गौणानेकपरम् । एवञ्चात्राद्यार्धेन कृत्रिमसिद्धिरन्त्यार्धेन दत्तकसिद्धिरिति बोध्यम् । नचैवं क्षेत्रजस्यापि स्वीकारापत्तिः, नियोगनिषेधेनैव तन्निषेधात् । तत्र क्षेत्रज इति त्वौरसविशेषणम् । कृत्रिमस्वरूपं तु मातापितृविहीनः प्रौढो विप्रत्वादिना परीक्षितः सवर्णो धनादिलोभेन स्वयं पुत्रार्थिना पुत्रीकृत इति ।

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥

इति मनूक्तेः । विधिस्तु दत्तकोक्तवत् सर्वोऽत्र बोध्य[1] इत्याहुः ।

स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमात् ।

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
सप्तमीं पञ्चमीं चैव गोत्रं तत्पालकस्य च ॥

इति बृहन्मनोश्च क्रीतस्यापि कलौ स्वीकारस्तद्युगान्तरविषयप्रतिपादनं वेति । क्रीतेष्विति यथाश्रुतमेव साध्विति केचित् ।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

इति मनूक्तेः । मातापितृभ्यां प्रत्येकमन्यतराभावेऽन्यतरेणोभाभ्यां वा भरणासामर्थ्येन विधिपूर्वं दत्तः प्रतिगृहीतृसवर्णो दत्तकः । अनापदि तु पुत्रदानं नि-

---

( १ ) बोध्यम्—इति सर्वपुस्तकेषु पाठः ।

षिद्धम् । अत्र पत्युः पत्न्यनुमत्यैव दातृत्वम् । अ-
त्यन्तापदि तदनुमत्यलाभे स्वातन्त्र्यमपि । पत्न्यास्तु पत्य-
नुमत्यैव । मृते तु तस्मिन् स्वातन्त्र्यम् । ज्येष्ठस्तु सर्व-
था न देय इति दिक् ॥ २१ ॥

अथ सापिण्ड्याभावेऽपि वाचनिकनिषेधमाह पि-
तृव्येति सार्धेन—

**पितृव्यभार्याभगिनी च तत्सुता-**
**ऽथो मातुलानीभगिनी च तत्सुता ॥**
**ज्येष्ठस्य भार्याभगिनी जनन्याः**
**स्वसुः सपत्न्यात्मजजाऽविवाह्या ॥ २२ ॥**

पितृव्येति । अथो अनन्तरं, पितृव्यपत्न्या भ-
गिनी तत्कन्या चाऽविवाह्या । तथा मातुलपत्न्या भ-
गिनी तत्सुता चाऽविवाह्या । तथा ज्येष्ठस्य भ्रातुः
पत्न्या भगिनी अविवाह्या । तथा स्वमातुर्भगिन्या या
सपत्नी तत्सन्ततिकन्या अविवाह्येत्यर्थः ॥ २२ ॥

**अथ स्वभार्याभगिनी च तत्सुता**
**करग्रहे नैव भवेत्प्रशस्ता ॥**

क्वचित्तृतीयेऽथ चतुर्थके वा

विवाह इष्टः कुलदेशभेदात् ॥ २३ ॥

अथेति । अथ अनन्तरं, स्वपत्न्या भगिनी तत्कन्या च करग्रहे पाणिग्रहणे प्रशस्ता नैव भवेदित्यर्थः । अत्र——

मातुः सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ।
पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ॥

इति बौधायनोक्तेः । 'भार्यास्वसृदुहिता पितृव्यपत्नीस्वसा चे'ति बह्वृचगृह्यपरिशिष्टाच्च । किञ्चिदंशस्य समूलत्वेऽप्यन्यांशे मूलं चिन्त्यम् ।

अथ मातुलकन्यादिपरिणयनमाह—क्वचिदिति । अथाऽनन्तरं तृतीये चतुर्थे वा, कः स्वार्थे, विवाह इष्टः ।

तृतीया वा चतुर्थी वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥

इति चतुर्विंशतिमतोक्तेः ।

चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा ।
पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम् ॥

इति पराशरोक्तेश्च । 'तस्मात् समाना दत्ताश्चाद्यस्य जायतेऽन्न उत तृतीये सङ्गच्छावहे चतुर्थे सङ्गच्छावहे' इति शतपथश्रुतेश्च । 'तृतीयां जहुर्मातुलस्येव योषे'ति बह्वृचश्रुतेश्च । अयमपि न सार्वत्रिक इत्याह क्वचिदिति । मुख्यासम्भवे इत्यर्थः । चतुर्विंशतिमते तन्नावेत्युक्त्या शाकटायन इत्याद्युक्त्या चाऽस्याऽनुकल्पत्वस्य स्पष्टं प्रतिपादनात् । तथाचाऽनुकल्पत्वे नायं भवतीति सिद्धम् । सोऽपि न सर्वत्रेत्याह कुलदेशभेदादिति । तथाच येषां कुले देशे वा तदाचारो नास्ति तद्विषयाः सर्वे निषेधाः । येषां तु देशादौ तथाऽऽचारोऽस्ति तेषां न दोषः, 'येनास्य पितरो याता' इति मनूक्तेश्चेति केचित् । अन्ये तु ब्राह्मादिविवाहे पितृगोत्रनिवृत्तेर्गान्धर्वादिविवाहे तदनिवृत्तेर्ब्राह्मादिविवाहोढापुत्रादेरनुकल्पत्वेन तृतीयादिविवाहे न बाधकम् । एवं मातृष्वसृकन्याया अपि निषेधास्तु गान्धर्वादिविवाहोढासन्तानविषयाः । एवं कलिवर्ज्यत्वपि । यद्वा आसुरादिष्वपि देशविशेषेण मातुलसुतादिविवाहो धर्म्यः । तथाच बौधायनः—'पञ्चधा विप्रतिपत्तिर्दक्षि-

णतः अनुपनीतेन भार्यया च भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमित्यादि' इति दिक् ॥२३॥

न्यूनत्वादिव्यवच्छेदायाऽध्येतृणां प्ररोचनाय चाह—

**पद्यप्रसूनैः शरनेत्रसंख्यै-**
**रलङ्कृता कल्पलता मदीया ॥**
**अध्यापकाऽध्येतृजनाय नित्यं**
**दद्यादभीष्टानि परःशतानि ॥ २४ ॥**

पद्येति । शरनेत्रसंख्यैः पञ्चविंशतिसंख्याकैः । इदं चोद्दिष्टाङ्केत्यर्धस्य, अन्त्यो द्विनिघ्न इत्यर्धस्य च श्लोकत्वमभिप्रेत्य । अन्यथा तु युगनेत्रसंख्यैरित्याद्यूह्यम् । पद्यान्येव प्रसूनानि पुष्पाणि तैर्भूषिता मदीया कल्पलता अध्यापकश्चाऽध्येता च जनश्चोदासीनः प्रेक्षकस्तत्समाहारस्तस्मै, अध्यापकाऽध्येत्रोर्जनः समूहस्तस्मै वा, अध्यापकश्चाऽध्येतृजनश्च तयोः समाहारस्तस्मै वा परःशतानि शतात्पराणि सहस्रादीनि अनन्तानीति यावत् , पारस्करादित्वात्सुडागमः, वाञ्छितानि नित्यं सर्वदा दद्यात् प्रार्थनायां लोट् । इति शिवम् ॥२४॥

देवालयपुरावासिदेवश्रीपतिजन्मनः ॥
आपदेवस्य ग्रन्थोऽयं जगज्ज्ञानातु तत्त्वतः[१] ॥ २५ ॥

इति श्रीदेवालयपुरावासिश्रीनीलकण्ठसूनुश्रीपति-
सूनुना आपदेवाऽपरनामधेयेन श्रीसदाशिव-
देवेन विरचिता सापिण्ड्यकल्पलतिका
समाप्तिमगमत् ।

इति श्रीमद्रामकृष्णदेवसूरिसूनुश्रीमन्नारायणदेवविर-
चिता सापिण्ड्यकल्पलतावृत्तिः समाप्ता ।

(१) स्पष्टार्थमिदं पद्यं बहुषु पुस्तकेषु नास्ति, नैव चैकस्मिन्नपि टीकापुस्तके ।

॥ श्रीः ॥

# सापिण्ड्यकल्पलतिकायाः पद्यानामकाराद्यनुक्रमणिका ।

॥ श्रीः ॥

# टीकायां स्थितानां पद्यानां पद्यांशानां च अकाराद्यनुक्रमणिका ।

॥ श्रीः ॥

# ग्रन्थान्तर्गतानां ग्रन्थानां ग्रन्थकर्तॄणां च वर्णानुक्रम-

# सूचीपत्रम् ।

॥ श्रीः ॥

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| श्रोतॄणामनुषङ्गतो | श्रोतॄणामानुषङ्गतो | १ | ९ |
| ययौस्तौ | ययोस्तौ | २ | ६ |
| षडित्युक्तिर्न्यूनाधि– | षडित्युक्तिर्न्यूनाधि– | ४ | १७ |
| द्विगुणनुपर्युपरि | द्विगुणानुपर्युपरि | १४ | १५ |
| विशाङ्कं | विंशाङ्कं | १९ | ३ |
| समूहः । सा तु | समूहः सा तु | २० | ४ |
| द्वात्रिदङ्काः | द्वात्रिंशदङ्काः | २० | ७ |
| सन्निमा | सन्निमां | २३ | ६ |
| एष | एव | २३ | ७ |
| पितामहदिभिः | पितामहादिभिः | २७ | २ |
| मातामहाभिदिरपि | मातामहादिभिरपि | २७ | २ |
| नतुभय० | नतूभय० | ३३ | ५ |
| ०तन्निवृत्य– | ०तन्निवृत्त्य– | ३३ | १० |
| दाक्षिण्यात्यानां | दाक्षिणात्यानां | ३७ | १६ |
| पञ्चमी मातृपक्षा० | पञ्चमीं मातृपक्षा० | ३८ | ९ |
| पञ्चमादूर्ध्वं | पञ्चमादूर्ध्वं | ३८ | १७ |
| प्रागुक्तेन | प्रागुक्तत्वेन | ४० | १ |
| उक्तोऽर्थः । सप्तमान्तं | उक्तोऽर्थः सप्तमान्तं | ४३ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| त्तिरूक्तत्वादित्यर्थः ॥ | त्तेरूक्तत्वादित्यर्थः ॥ | ४४ | ६ |
| सपिण्डतया | सपिण्डताया | ४४ | १६ |
| भागिनेयान्यथास० | भागिनेयान्यन्यथा स० | ४५ | १४ |
| स्वारम्भकेन | स्वारम्भकेण | ४७ | १३ |
| रामकेयराजयोः | रामकेकयराजयोः | ४८ | १ |
| भागिनेयान्यथास० | भागिनेयान्यन्यथा स० | ४८ | १४ |
| सङ्करकारिणीति | सङ्करकारीणीति | ४८ | १४ |
| स्वारम्भकेन | स्वारम्भकेण | ४९ | ८ |
| परिसंख्यार्थक्यो० | परिसंख्यानर्थक्यो० | ४९ | १७-१८ |
| पितृपत्नी० | पितृपत्नी० | ५२ | ७ |
| त्नीपक्ष० | त्नीपक्ष० | ५२ | १७ |
| इत्यादिषु । तद्भ्रातृत्वादिना यदीद— | इत्यादिषु तद्भ्रातृत्वादिना । यदीद— | ५३ | ५ |
| प्रसुतत्वादौरसा० | प्रस्तुतत्वादौरसा० | ५७ | १६ |
| ०वचनात् । औरसादीना पुत्राणा | ०वचनादौरसादीनां पुत्राणां | ५८ | १ |
| प्रजावतम् ? ॥ | प्रजीवनम् ॥ | ५८ | ७ |
| स्वसुः सपत्नात्मजजा | स्वसुः सपत्न्यात्मजजा | ६० | १० |
| तृप्तां जहु० | तृप्ता जहु० | ६२ | ३ |
| ऽध्येतृणां | ऽध्येतॄणां | ६३ | २ |

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.

Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.

Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.

Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 6—(Pārt I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.

Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No 7—( Part II ) Ditto Rs. 1-8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.

Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10-6

No. 9—(Part 1)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 10–(Part–II)–The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15-(Part 1)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–14

No. 15–( Part–II )–The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A.

No. 19–( Part. II ) Ditto Ditto

No 19—( part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannatha S'āstri Hoshing Sāhityopādhyāya, Sādholāl Research Scholar, Sanskrit College Benares, with a Foreword by Pandit Gopi-Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares.

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyaya Pañchanana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A. D., Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares.

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa Shāstri Khiste Sāhityāchārya Assistant Librarian Government Sanskrit Library Saraswati Bhavan Benares.

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī. Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharma-śāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares.

*No.* 24–*S'*rī Rāmatāpinīyopaniṣad with the Commentary called *R*āma-*K*āśikā in Pūrvatāpinī and *Ā*nandanidhi in Uttaratāpinī by *Ā*nandavana.

Ed. with Introduction etc. by *A*nantarāma *S'*āstrī Vetāla *S*āhityopādhyāya, Post-*Ā*chārya *S*cholar, Govt. *S*anskrit College, Benares, with a Foreword by Pandit Gopī *N*ātha Kavirāja, M. *A*., Principal, *G*overnment *S*anskrit *C*ollege, Benares.

*No.* 25–*S*āpiṇḍyakalpalatikā by *S*adāśiva Deva alias *Ā*padeva with a commentary by *N*ārāyaṇa Deva.

Edited with Introduction etc. by Jagannātha *S'*āstrī Hośiṅga, *S*āhityopādhyāya, *S*ādholāl *R*esearch *S*cholar, Govt. *S*anskrit College, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgānātha Jhā.

(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 5

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasala Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa natha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A.Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala [illegible]

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: b nātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Li by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākl Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvived

(e) Food and Drink in the Rāmāyanic Age, by M nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath ]

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinh

Vol. V—

(a) Ancient Home of the Aryans and their migration tc by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as d in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of Ṛgveda, Vājasaneya tirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S

(e) Formal Training and the Ancient Indian Thought, b Sinha.



(f) History and Bibliography of Nyāya Vais'eṣika Liter by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇ Manmatha nāth Roy.

(i) Notes and Queries (1) Virgin Worship, by Gop Kaviraj.

Vol. VI—(In progress)

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jaco



(b) Some Aspects of the History and Doctrines of the Nā by Gopinath Kaviraj.

(c) Studies in Hindu Law (5): Evidence, by Ganganatha J

To be had of

The Superintendent, Government Pr

ALLAHABAD, U. P. (INDIA).